ऋष्यी[1] ॥*॥ बध्नाति मनो यूनामिति बन्धकी ॥*॥ धातकी। ताम्रपुष्पी ॥*॥ अनडुही। ङीप्रत्ययान्तपाठो गणेऽस्त्रीत्वप्रतिषेधार्थः[2]। तेन। अनडुही। वृन्दारिका ॥ वामनादयस्त्वनडुहीभार्य इत्युदाहरन्ति[3]। तन्न युक्तम्। जातिप्राण्यङ्ग्योऽमान्यादाविति[4] नियमितत्वात् पुंवद्भावस्य निषेधः सिद्ध एव ॥ अथवा। पञ्चभिरनडुहीभिः क्रीतः। पञ्चानडुहिरित्यादौ ङ्यः लुचीत्यनेन[5] लुक्प्राप्ता निषिध्यते। एवं सर्वत्र ॥*॥ शष्कण्डी। हैमवतः कश्चिद्वृक्षः[6] ॥*॥ कोशातकी। पटोली ॥*॥ अनड्वाही ॥*॥ वृसी। व्रतिनामासनम्[7] ॥*॥ वेतसी। वञ्जुलः। अम्लवेतसश्च ॥*॥ पटी। प्रच्छादनवस्त्रम् ॥*॥ नटी ॥*॥ क्रोष्ट्री। क्रोष्ट्रीशब्दस्य[8] पाठः सुखार्थः। क्रोष्टोः स्त्र्यनौ क्रोष्टृजिति[9]। ऋदन्तन्वनुगिदश्च इत्यनेन[10] ङीप्रत्ययः सिद्धः ॥*॥ ओकणी[11]। पर्यन्तवनस्य संज्ञा। उकणीत्यन्यः[12] ॥*॥ काकणी। पणचतुर्थभागः ॥*॥ अलचस्यापत्यमिञि स्त्री। आलची। ङ्यो प्राप्ते[13] ॥*॥ आलजी ॥*॥ भिक्षुकी ॥*॥

---

१ ऋष्यी A

२ गणे स्त्रीत्वाप्रतिषेधार्थं° F

३ भार्या इत्युदा° C

४ ? °प्राण्यगङ्योमान्यादाविति F, °प्राण्यगद्योर्मा° A, °प्राण्यगयोर्मा° B, °प्राण्यंगादिति C, cf P vi 3, 40-1

५ ? ङ्यड A B, यङ लुकीत्यनेन लुक्प्राप्तिर्निषिध्यते C, ङीङ लुची-त्यनेन लुक्प्राप्त्या नि° F, on the *luk* cf P i 2, 49 50, iv 1, 88

६ कश्चिद्वृत्स B C

७ वृशी°A F, वृशी व्रतीनासना। C

८ क्रोष्टाशब्दस्य C, क्रोष्टीशब्दस्य F

९ ? क्रोष्टोस्त्र्यनौ क्रोष्ट्रजिति B, क्रोष्ट्रोस्त्र्यनौ° A, क्रोष्टोस्त्र्यतौ क्रोष्ट-जिति C, क्रोष्टोस्त्र्यानौ क्रोष्ट्रजिति F, cf P vii 1, 95 7 [? स्त्र्यनौ', where अन् (? अनु) = sarvanâmasthâna]

१० ऋदतत्वेन्नुगिद इत्य° A, ऋदंतत्वेन्नुगिदच ऋदतश्चेन्नुगिदंच इत्यनेन ङीपप्र° C, ऋदतत्वेन ऋन्नेभ्य इत्यनेन° F [ऋदन्त-न्-वन्-उगित्-अञ्? cf P iv 1, 5-7]

११ उकर्णी A B C

१२ Thus A B C F, पयत वनस्य° C, [Pan iv 1, 41 ed उणक, Kâś V ed. उकण, MS I O 2440 उणक]

१३ ङे प्राप्ते A, ष्याञि प्राप्ते D, ङ्यपाप्तौ C, cf P iv 1, 78

न्दरा गिर इति भवति[१] ॥ भोजस्तु सामान्येनैव ङीप्रत्ययं दर्शय-
ते ॥ * ॥ पूयी । दुर्गन्धा ॥ * ॥ शक्यन्ते मृष्यन्ति तस्यां परस्परसंबन्धं
शस्तुषतिला[२] इति शष्कुली । भक्ष्यविशेषः ॥ अथवा । शक्नोति पर्या-
प्नोति पुद्गलविकारं शब्दं ग्रहीतुमिति शष्कुली । कर्णशष्कुली ॥ * ॥
देह्यते । देहली । द्वाराग्रस्थला ॥ * ॥ तटी[३] ॥ * ॥ तपः शीलमस्याः ।[४]
छत्रादेर्ण इति णे सति । तापसी ॥ * ॥ सिनी सिता[५] वाला कला
यस्यां सा सिनीवाली[६] । दृष्टेन्दुरमावास्या ॥ * ॥ पूली । तृणसघातः
॥ * ॥ असकृत्सक्यत[७] आस्वाद्यते गजैरिति सल्लकी । गजप्रिया[८] ॥ * ॥
गौतमी[९] । अस्य पाठः सुखार्थः । मतान्तरे तु स्वरः प्रयोजनम्[१०] ॥ * ॥
तटतापसयोरजातित्वात् । अन्येषां तु स्त्रीविषयत्वादप्राप्ते ॥ ४९ ॥

कटेटभौलिङ्ग्यधिकारदेहा
गवादनोद्वाहनतेजनाः स्युः ।
आपच्चिको भौलिकिभौरिकी च
काकादनः प्रत्यवरोहिणी च[११] ॥ ५० ॥

कटस्य ईटः । कटेट । कटेटी[१२] ॥ * ॥ भुवि लिङ्ग कीर्तिरस्येति
भूलिङ्ग ऋषिः । तस्यापत्यमिति शाल्वासेत्यादिना[१३] । इञि भौलि-

---

१ सुंदरगिर° C, सुंदरीणां सुंदरा-पार्मिति° D, cf Sl 53 comm
२ तस्यां परस्परसंबधस्तुप° C, तस्यां परस्परसंबधं स्तुषतिला B, तस्यां परस्परसंबंधिनस्तुषतिला F
३ Or देहली । द्वाराग्रस्थला तटी ॥ acc to the other version
४ तपतेऽस्या C, cf Sl 386
५ शिनी° A B C D, °शिता A D
६ शिनीवाली A B C D, cf Aufr Ujjv
७ °लक्ष्यते A C, शक्नत् शब्दते? D
८ गजप्रिया लता F
९ गोतमी D
१० स्वरप्रयोजन A, D om from तटतापस° to end
११ आपिच्चको °प्रत्यवरोहणी च F
१२ °टट कटेटी । C
१३ शाल्वाशे° A, साल्वासे° B, साल्वाशे° F, संघासे° C, cf Pan iv 1, 173

त्वम् ॥ * ॥ तरुणी । सुरा ॥ * ॥ तलुनी । सुरा[1] ॥ * ॥ अग्रं हायनमस्याः[2] । आग्रहायणी पौर्णमासी । अत एव निपातनाद्दीर्घत्वं णत्वं च ॥ * ॥ नन्दी । हठहृता[3] स्त्री ॥ * ॥ पण्डते याति मनोऽस्मिन् । पण्डरः । तद्योगात् पण्डरी[4] । पटी ॥ * ॥ पुष्कली । वनस्पतिः[5] ॥ * ॥ लवणी । ओषधिः[6] । समुद्रपार्श्वस्रोतो यत्र वहनानि स्थाप्यन्त इत्येके[7] ॥ लवणा यवागूरिति गुणशब्दोऽजातौ द्रष्टव्यः[8] ॥ * ॥ पिङ्गली । पिशङ्गी[9] ॥ * ॥ मुसली । ओषधिः[10] ॥ * ॥ विभीतकी[11] ॥ * ॥ नन्दति । वृद्धिं यातीति नन्दी । संज्ञाद्यणि । नान्दी ॥ * ॥

पण्डरपिङ्गलनन्दानामजातित्वात्[12] । अन्येषां तु स्त्रीविषयत्वादप्राप्ते ॥ आकृतिगणोऽयम् । तेन देवदाली पटोलीत्यादयो[13] द्रष्टव्याः ॥ ५१ ॥ इति गौरादिः ॥

शोणोऽथ भरुजस्तूणकमलौ विकटाहनी ।
चान्द्रभागा भवेन्नद्यां त्र्यर्थशून्यादिकारतः ॥ ५२ ॥

शोणादयः शब्दाः शोणादिरित्यनेन[14] ङीप्रत्ययभाजो वा भव-

---

१ तलुनी च ॥ F , तलुनी ॥ C

२ अग्रहायनमस्या. A , अग्रे हा° F

३ हठगृहीता F

४ ? पडुर.° पडुरी B C F , C F om पटी

५ पुन्नली° B C , पुष्कली धनपङ्क्तिः । D , see p 80, l 2

६ लवली° B C (not in text), औषधि. C , उषरि D

७ समुद्रपार्श्वश्रोतो° A B C , समुद्रपार्श्वे स्त । यत्र वाहनानि° F D om from समुद्र° , A inserts these words before लवणी

८ °शब्दो जादिर्द्रष्टव्य D , °इति लवणशब्दोऽजादौ द्रष्टव्य F

९ पिप्पली । पिसगी A , °पिशंगवर्णयुक्ता D

१० मुशली° A B D F , मुषली C

११ विभीतकी B C F

१२ पडुर° B C F , D om from पण्डर° to अप्राप्ते

१३ देवदाली पटोली वेदी [वेदी F , वेटी C] वाकुची धातकी पाटसीत्यादयो B C F

१४ शोणादय शब्दा विशकटपर्यंता [विसकट° F] शोणादेरित्य° D F

मि ॥ शोणी । शोणा । रक्तवर्णयुक्ता ॥ कश्चित्संज्ञायामपि शोणी शोणा नद्येति[1] ॥ ० ॥ भरणी । भरणा । केचिद्धरणा विष तण्डुला[2] ॥ ० ॥ दूणी । दूणा । दूणीमुखोत्कृतमरेण विशीर्णपक्षि[3] । शोणा धिषणा दूणा[4] सूचेत्यादि ॥ ० ॥ कमली । कमला नाम काचित् ॥ ० ॥ विकटी । विकटा । रचना ॥ ० ॥ दीर्घाङ्गी । दीर्घाङ्गा शरत्[5] ॥ अत्र गुणस्य केवल स्त्रियां न संभवति नित्यं नपुंसकलिङ्गत्वात्[6] । अतस्त्वन्नादराद्यत ॥ पक्षी । पक्षा । इति कश्चित् केवलश्च स्त्रियामुदाहरति ॥ ० ॥ चान्द्रभागी मनराशि । चान्द्रभागा[7] नदी । ठिञ्ञादभिप्रायरिणा[8] णी मात्र य शोणादिपाठादस्यां निमित्तान्तर विधीयत इति विवक्षार्थं ॥ चन्द्रभागा नद्यामिति केचिदाहु[9] । चन्द्राख्या चन्द्रभागी[10] चन्द्रभागा काचित् । नदी तु चन्द्रभागेति[11] मतद्वय वामनाचार्यस्य[12] ॥ पाणिनिमतदायुकी तु चन्द्रभाग इव भागो यस्याश्चन्द्रभागी[13] चन्द्रभागा नाम नदी । अथवा चन्द्रभागा[14] नाम देवता स्त्री वा काचिदित्याहुः ॥ केचित्तु चन्द्रभागो नाम पर्वत । तत्र प्रभवतीत्यपि । चान्द्रभागी चान्द्रभागा[15] नदी । चान्द्रभागयन्येत्युदाह

---

१ शोणी । शोणा ॥ C. ; cf. Pâṇ. iv 1 43.

२ केचिद्धरणा विष तंडुला । A ; चारुपुष्पा विष तंडुला C. ; केचिद्धरणा° F

३ Raghuv 9, 66.

४ धिषणाद्या B

५ / दीर्घाङ्गी । दीर्घाङ्गा । दीर्घाङ्गा शरत् B. C. दीर्घाङ्गी । दीर्घाङ्गा । दीर्घाङ्गा शरत् । D ; शरत् १ शरत् । प्रावृट् F

६ नपुंसकत्वात् B. C. F

७ चंद्रभागा F

८ P iv 1 15 ; B. C. F om. णी

९ Thus Kâç. V iv 1 43

१० Om. C.

११ नदी चंद्रभगेति D

१२ °र्यस्य ॥ वामनाचार्यस्य वा C.

१३ Om. B. ; F om. from चन्द्रभागा काचित्

१४ चंद्रभागी C.

१५ तत्र भवतीत्यपि चंद्रभागी चा द्रभागा A.

रन्ति[1] ॥ भोजस्तु चान्द्रभागादनद्यामिति[2] सूत्रं पपाठ ॥ - ॥ त्यर्थशून्यादिकारतः । त्यकणाविति क्तिप्रत्ययो भावाकर्त्रोर्विहितस्तदन्तस्तदर्थप्रत्ययान्तो वा यो न भवति[3] । ततोऽनेन ङी विकल्पितः । अशनिः । अशनी ॥ शक्तिः । शक्ती । शस्त्रम्[4] ॥ आत्मभरिः । आत्मभरी ॥ त्यर्थशून्यादिति किम् । शक्तिः सामर्थ्यम् ॥ कश्चिदस्मादपि ङी मन्यते । अहरणि । का त्वं कारिमकार्षी.[5] ॥ ५२ ॥

चण्डः पद्धतिकल्याणपुराणकृपणध्वजाः[6] ।
विशालारालमूषा हन्त्वहूदारविशङ्कटाः[7] ॥ ५३ ॥

चण्डी । चण्डा । परुषा ।

सा किलाश्वासिता चण्डी भर्त्रा तत्संश्रुतौ वरौ[8] ॥

चण्डारालशब्दयोर्गौरादिलक्षणे ङीप्रत्यये सिद्धे वह्वादौ[9] पाठ. सञ्ज्ञायां विकल्पार्थ इति शाकटायनः ॥ * ॥ पादयोर्हति.[10] । पद्धतिः । पद्धती । त्यर्थः पाठः ॥ * ॥ कल्याणी । कल्याणा कथा ॥ * ॥ पुराणी । पुराणा छाया ॥ * ॥ कृपणी । कृपणा नाम काचित् ॥ * ॥

---

१ चांद्रभाग्या इत्युदा० C

२ ? चांद्रभागादनद्यामिति A , चाद्रभागी वुनद्यामिति C , चंद्रभागाद० F The *Kātantrapariśishṭa* remarks चान्द्रभागादनद्याम् । अनद्यामर्थे चान्द्रभागादीर्भवति । चन्द्रभागभग्ग चान्द्रभागी वुति ॥ अनद्यामिति किम् । चन्द्रभागनामगिरि. । तत्र भवतीत्यणि चान्द्रभागा नदी ॥

३ भावाकर्त्रो वि० B , भावाकर्त्तोर्वि० A , त्यकरणाविति० भावात्कर्त्ता हितस्त० C , भावकर्त्रोर्विहित० F , ०प्रत्ययाते० B C , D corr ०तदास्तदर्थप्रत्ययांता ङ्यादो न भवति

४ शक्ता । शस्त्र आ० C , शिक्षत्कारि । शिक्षत्कारी । वत्सा । D , शस्त्रं । शक्तत्कारि । शक्तत्कारी F

५ ङीप् मन्यते० C , मन्यते । सामर्थ्यात् । अहरणि । का त्व० A , त्यर्थ० कि । क्षति । हृति । अहरणि । का त्वं० D F , अहरति. ।० B C

६ चडपद्धति० B C

७ ०विसकटा F

८ Raghuv 12, 5

९ शोणादौ F , *Sākaṭāyana* apparently begins this *gaṇa* with बह्व

१० पादयोहत. A

ध्वजी । ध्वजा । पताका ॥ • ॥ विशाखी । विशाखा कीर्ति ॥ • ॥ भराली । भराला । भूमि[१] ॥ ॥ मूषी । मूषा । सुवर्णाद्यावर्तनस्थान[२] माविविशेषो वा ॥ • ॥ हसन्ती । हसन्ता ॥ • ॥ पञ्ची । मञ्जुर्नाम का चित् । गुणवचनाद्वतो वाऽसुरोरित्यनेन[३] गुणवचनादिकस्य सिद्ध एव ॥ ॥ चदारी । चदारा सूक्ति[४] ॥ • ॥ विसङ्कटी । विसङ्कटा[५] बुद्धि ॥ • ॥ आकृतिगणोऽयम् । तेन सुन्दरकन्दरादयो[६] द्रष्टव्या ॥ ५३ ॥ इति शोणादि ॥

> कुण्ड पाके ऽकृत्रिमार्थे स्थले च
> भाज पक्के कामुक स्याद्रिरंसौ[७] ।
> नाग स्थूले कृष्णवर्णे च कालो
> धान्याधारे[८] संमतो गोणशब्द ॥ ५४ ॥

कुण्डादय शब्दा पाकादावर्थे पाकाद्ये कुण्डादेरित्यनेन[९] ङी प्रत्ययान्ता भवन्ति । पाके कुण्डी । कुण्डाऽन्या ॥ दारुक्रियैव तत्समन्या इत्यदा तथोच्यते । यस्तु द्रव्यवचन कुण्डशब्द[१०] स नित्य नपुंसक एव वर्तत इति न मधुरादर्थे युक्त[११] ॥ • ॥ अकृत्रिमेऽर्थे स्थली । स्थला ऽन्या ॥ पुरुषप्रयत्ननिष्पाद्या वेदिका इत्यन्ये ॥ • ॥ पक्केऽर्थे भाजी । भिक्षायामित्यन्य । भाजाऽन्या । भक्तपरि[१२] ॥ • ॥ मैथुनेच्छी नापि

---

१ भराला राशि भूमि B.; भूमि F
२ सुवर्णप्रवर्तनस्थानं D.
३ नी वरीरित्यने° A.; नी वरेरित्यनेन B.; एतनेन विकल्प F; का चित् । गुणवचनात्तु पूर्वेण विकल्प°D.; cf. P iv 1 44
४ शक्ति F
५ विसंकटी । विसंकटा D F
६ सुंदरादयो F
७ ऽकृत्रिमे स्थलच° E.; °स्थलवा युक्त A.
८ धान्याधारे F
९ कुंडादिरित्यनेन D. C. F; F om. पाकाद्ये
१० यत्तु द्रव्यवचन A.; °कुण्डशब्दं D
११ न मधुरादर्थं । तत्र युक्तं । F
१२ भक्तपरि B. D

काया[1] कामुकी। कामुकाऽन्या। धनाद्यभिलाषुका ॥ - ॥ स्थूलेऽर्थे नागी। नागाऽन्या। दीर्घादिगुणयुक्ता मज्ञा वा काचित्[2]। चयविशेष इत्यन्ये॥ हस्तिसर्पजातिवाचिनस्तु ङी भवत्येव। प्रत्युदाहरणं गुणवचनस्य[3] ॥ * ॥ कृष्णवर्णेऽर्थे काली। छाया बलान्याशु ततान काली॥ कालाऽन्या। धमनी ॥ रत्नमतिस्तु कालशब्दस्य मज्ञावाचिनो ङी। न तु कृष्णवर्णवाचकस्य कृष्णत्वाव्यभिचारादित्याह ॥ * ॥ धान्याधारे[4] गोणी। यस्याश्छाटीति[5] प्रसिद्धिः। यथा।

गोणी जनेन स निधातुमुद्धृतामनुचणं नोचतर प्रतीच्छति[6]।

गोणाऽन्या। तृणविशेषः ॥ ५४ ॥

कुशो लोहविकारे स्याद् घटः कुम्भश्च मृन्मये।
कबरः केशविन्यासे[7] नीलश्चौषधिदेहिनोः ॥ ५५ ॥

अयोविकारे कुशी। कृष्युपकरणम्। न सामान्येनायोविकारः॥ कुशाऽन्या। अलोहविकाराकृतिरेव काष्ठादिमयी॥ भग्नस्याचस्य प्रतिष्टम्भ इत्यन्ये। अपरे तु वस्त्रेति ब्रुवते[8] ॥ * ॥ मृन्मये पात्रे। घटी ॥ घटाऽन्या। गजघटा। करिघटा ॥ * ॥ कुम्भी। तैलादिस्थानं स्तम्भाधारो वा[9]। कुम्भाऽन्या ॥ * ॥ केशरचनायां कबरी। वेणी। कबरा[10]

---

१ नायकायां F, मैथुनेच्छायां C

२ संस्रवा काचित्० A, संज्ञेति केचित्। कपिविशेष० D

३ हस्तिभार्प्यजाति० प्रत्युदाहरणा तु गुण० A, हस्तिसर्पवाचिनस्तु० F, D om from हस्ति०

४ धान्यागारे० F

५ ? धान्याधारे गोणी यस्याश्छहेति A, °यस्या. छट्टीति C, यस्यास्त्वट्टीति D, यस्याः छाटीति F, cf Mahr छाटी (S शाटी) a piece of cloth

६ Şışup 12, 10

७ केशविन्यासे A

८ ? वस्त्रेविक्रवतो D (? cf Mahrâthî वल्ली "a pole for impelling a boat in shallow water"), वलेति० C, वलोवि० B, वरेलेति० F (cf वरल, वरोल)

९ तिलादिस्थान०B, for the second meaning cf कुम्भक

१० कावरा D, F om वेणी.

पञ्ची । विपञ्चाऽन्या ॥ - ॥ लोकवृन्दे गोष्ठी । समानजातीयो जनसमुदायः[१] । यथा । गोष्ठेषु गोष्ठीकृतमण्डलासनान्[२] ॥ गोष्ठाऽन्या । भूर्यत्र[३] गावस्तिष्ठन्ति ॥ ५६ ॥

श्लेषद्रव्ये खलो लक्ष्यो विदारशठमोषधौ[४] ।
दूतः संदेशहारिण्यां कुट्टिन्यां शम्भलो बुधैः ॥ ५७ ॥

श्लेषद्रव्ये खली । खलाऽन्या ॥ * ॥ विदारी । शठी । ओषधिः ॥ विदारा । शठाऽन्या ॥ * ॥ दूती संदेशहारिका । दूताऽन्या । यथा ।

क्लृप्तपुष्पशयनाँल्लतागृहानेत्य दूतिकृतमार्गदर्शनः[५] ।

इत्यादिलक्ष्यदर्शनादिकारान्तोऽप्यनुमीयते ॥ * ॥ शम्भ श्रेयोयुक्तं लाति गृह्णातीति वा । शम्भली । कुट्टिनी ॥ वामनस्तु दूत्यां शम्भलीत्याह[६] । न तदस्मन्मनोरञ्जकं लक्ष्येष्वदर्शनात् ॥ शम्भलाऽन्या । देशविभक्ति. ॥

कश्चित्[७] शम्भलविदारशब्दौ गौरादावाह । कश्चिन्नायिकायां[८] सुन्दरी । अन्यत्र सुन्दराऽस्य बुद्धिरित्युवाच । तन्न समीचीनं गौरादावस्य दर्शनात्[९] । अयं चास्माभिर्लक्ष्यानुसारेण तत्रैव व्याख्यातः ॥ ५७ ॥

---

१ समानजातीयजन० D , समानजातीये जनसमुदाये F

२ Siṣup 12, 38 , ०आसमात् MSS , D has the whole stanza with several miscorrections

३ C om भूः , F om from भूः to खलाऽन्या in the next sloka , for A. see p ८२, note ६

४ विदारसठ० D E , A om this sloka and comment.

५ Raghuv 19, 23

६ दूत्या० C , ०शम्भलीत्याह B

७ रत्नमतिस्तु corr D

८ कश्चित् मायिकायां C , ०नायकायां F , om सुन्दरी

९ ०सस्मादर्शनात् D , see sl. 49

लोहितश्रुवकतालिगुकक्षा[1]
बभ्रुवल्गुमनुसूनुतलुक्षाः[2]।
तण्डमण्डुकपिकन्थकवृक्षा[3]
मन्तुतन्तुतनुमङ्क्षुतरुक्षाः[4] ॥ ५९ ॥

यञ्लोहितादिशकलान्तयञ्कौरव्यासुरमाण्डूकाड्डायन्[5] इत्यनेन स्त्रियां नित्यं डी भवति डायनादेशश्च ॥ लौहित्यायनी ॥ * ॥ श्रौव्यायणी ॥ * ॥ कात्यायनी[6] ॥ * ॥ आलिगव्यायनी[7] ॥ * ॥ काक्ष्यायणी ॥ * ॥ बाभ्रव्यायणी। कौशिकी[8] तु बाभ्रवी बाभ्रव्यायणी॥ गर्गादौ[9] तु बभ्रुः कौशिक इति पाठादिति नः समतम्[10]। वामनस्तु बभ्रुपाठं मन्यते[11]। कपिशब्दस्य च ॥ * ॥ वाल्गव्यायनी[12] ॥ * ॥ मानव्यायनी ॥ * ॥ सौनव्यायनी ॥ * ॥ तालुक्ष्यायणी[13] ॥ * ॥ ताण्ड्यायनी ॥ * ॥ माण्डव्यायनी ॥ * ॥ काप्यायनी। आङ्गिरसी तु कापी काप्यायनी[14] ॥ * ॥

---

१ कटालिगु० A, ०काचा B C, ०गुकक्ष्या F

२ बनुववाग्लामनु० B बभ्रुवल्गु० D E, ०सूनुतनुचा A

३ तडुमडु० A C, तडमड० D मडुमडु B, ०कर्थकवृचा C, ०तरचा. F

४ मरु for तनु D E, मकुरुचा A, मंचुतरचा B C

५ ? यक्षोहि० यञ्छौरव्यासुरिमडूकानुदेयन् A, (य oblit) लोहितादिशकान्तपञ्चौरव्यासुरिमांडूकाडायन्न D, ०ड्डायम् B, ०यञ्चौरव्यासुरिमांडूकाड्डीयम् C, ०यत्कौरव्या० F, ? the double यञ्, cf P iv 1, 16-19

६ लोहित्यायनी श्रौव्यायनी कालायनी A, लौहत्यायनी श्रौयायणी कात्ययनी B

७ आलिगव्यायनी D, लैगयायना B, लौंगव्यायनी C, I adds लैगव्यायनी

८ कौशका B, कौसिकी D

९ ०वाभ्रयायणी को गर्गादौ० B

१० ०इति न समतं। B C F, cf sl 249

११ वामनस्तु पाठं मन्यते B C

१२ वा for च B C, वालायायनी B वालाव्यायनी C, वाल्गव्यायनी D

१३ तालुचायणी B C, तालुक्ष्याय णी A

१४ कापायनी B C F

यच्छन्दो मेनका चात्र दण्डकापिप्पकेष्टकाः ।
रेवका धारका चैव द्वारकादेवकैरकाः[१] ॥ ६१ ॥

यदादय एडकान्ताः स्त्र्यातोऽयदाम्[२] इत्यनेनाकारस्येत्वं यत्प्राप्तं यदादिपर्युदासात् तद्भाजो न भवन्ति ॥ यका ॥ * ॥ मनिपचिमचां नाम्नीत्यनेनाकारस्येत्वे[३] । मेनका । अप्सराः ॥ * ॥ दण्डका । अरण्यम् ॥

वर्षाणि तिष्ठतु चतुर्दश दण्डकायाम्[४] ॥

प्राप्तानि दुःखान्यपि दण्डकेषु संचिन्त्यमानानि सुखीबभूवुः ॥

इति रघुकाव्ये चिन्त्यम्[५] ॥ * ॥ पिप्पका ॥ * ॥ इष्यते काम्यते प्रासादादिषु या सा । इष्टका मृद्विकारः ॥ * ॥ रेवा नदी । ततः संज्ञायां के । कुत्सादौ वा । रेवका ॥ * ॥ धारयतीति धारका ॥ * ॥ द्वारप्रकारा । द्वारका नगरी[६] ॥ यथा धनंजयस्य ।

चलत्पताकामुद्बद्धतोरणां तावविचताम् ।
द्वारकां गोपुरद्वारैः किष्किन्धनगरीमिव[७] ॥

देवका । अप्सराः ॥ * ॥ एरका । उदकतृणजातिः ॥ ६१ ॥

क्षिपका ध्रुवका चरका तत्सेवकया करकाचटके स्तः[८] ।
अवकालहके अलका स्यात् कन्यकया ध्रुवकेडकया च[९] ॥ ६२ ॥

क्षिपतीति क्षिपका । आयुधम् ॥ अथवा । अज्ञाता क्षिपा । क्षिप-

---

१ रेवका द्वारका चैव हारकादेव° A , °हारकादेव° E

२ ? एडकातास्त्र्यातोयदाम् A D , °तास्त्र्यातोय° F , परकातास्त्र्यातोय° B , एरकास्याख्यातोय° C , cf P vii 3, 44-46

३ मतिपचिपचां° B F , मेतीति पचिपची° C , मनिपधिमघां नाम्नीत्य° D , cf Kâś V vi 4, 120 , Uṇ S 5, 37

४ Anarghar (Calc Ś 1782, p 116) 4, 66.

५ Raghuv 14, 25

६ द्वारका नदी नगरी B C

७ द्वारकांगपुर° A B C , original D , किष्किधानग° F , किष्विंधन° B D

८ क्षिपकाध्रुवकाचटकाः सेव° E.

९ अवकालहत्से °ध्रुवके° E

अथ द्वितीयोऽध्यायः ॥

अर्धर्चध्वजकुञ्जशीधुमधवो वर्चस्ककूर्चाढकाः[1]
पङ्कानीकपिनाकनिष्ककपटाष्टङ्कः किरीटः कुटः ।
कूटः कङ्कटकर्बटाण्डशकटा वल्मीकसानू नटः ।
खण्डोद्योगविडङ्गशृङ्गसरकाः पुङ्खव्रजौ मोदकः[2] ॥ ६३ ॥

एतेऽर्धर्चादयः शब्दाः पुंसि नपुंसके साधवो भवन्ति ॥ अर्धस्यार्धो । ऋक् च । अर्धर्चः । अर्धर्चम् ॥ * ॥ ध्वजं पताका ॥ * ॥ कुञ्जो वनषण्डो हस्तिदन्तश्च[3] । यथा ।

अथोष्णभासेव समेत्य कुञ्जान् विहीयमानानुदयाय तेन[4] ॥

निकुञ्जोऽपि ॥ * ॥ शेते मुह्यत्यनेनास्मिन् वा हिताहितप्रतिपत्तिरिति शीधुर्मद्यम्[5] ।

मनोज्ञगन्धं सहकारभङ्ग पुराणशीधुं नवपाटलं च[6] ॥

मधुर्द्राक्षादिमद्यम्[7] ।

बिभ्रती मधुरतामधिपात्रं रागिभिर्युगपदेव पपाते[8] ।
आननैर्मधुरसो[9] विकसद्भिर्नासिकाभिरसितोत्पलगन्धः ॥

वर्चस्कं शकृत्[10] ॥ * ॥ कूर्चो दीर्घश्मश्रु[11] ॥ * ॥ आढकं मानविशेषः ॥ * ॥ पङ्कं कर्दम[12] । यथा ।

---

१ °ध्वजकुज° E , °सीधु° A , °कूर्चाटका. D E

२ विडंगरसका B C (in C शृंग is supplied)

३ वनषडो° B , वनखडो° A D , °हस्तिदतिश्च A , वनखडे° F

४ Kirát. 3, 32

५ शेते सुप्यतेमास्मिन्स हि° D , °प-त्तिसीधु° A

६ °सीधुं° A , Ragh 16, 52

७ मधु द्रा° B C

८ मधुरतां मधुपात्र D , Śiś 10, 8 (°अतिमात्र eds)

९ मधुरसो eds for मधुर् असौ

१० वर्चस्क ° F , सहात् A

११ श्मश्रु. B C F

१२ पक. F ; A. om. पङ्कं कर्दमः

शाको मस्तककल्कशूकनिकटाः शुल्कं निदाघो नखो
बाणद्रोणसुवर्णभूषणरणाः कार्षापणस्तोरणः ।
काण्डस्ताण्डवदण्डमण्डपिटकाः सक्तुस्तडागव्रणौ[1]
पेटो मञ्चकवारबाणचरणा वस्त्राम्बरैरावताः ॥ ६४ ॥

शाक भक्ष्यविशेषः[2] ॥ * ॥ मस्तको मूर्धा ॥ * ॥ कल्कम् । औषधानां निर्यासो दम्भः पातक च[3] ॥ * ॥ शूकं धान्यादेः सूची । वृश्चिकादेः कण्टकोऽपि ॥ * ॥ निकटः समीपम् ॥ * ॥ शुल्को मण्डपिकायामाय-स्थान स्त्रीधनं च[4] ॥ * ॥ निदाघं ग्रीष्मः ॥ * ॥ नखं पाणिजः । यथा रुद्रस्य त्रैलोक्यसुन्दर्यां हस्तिवर्णने[5]। ज्योत्स्नाजनितदन्तवेदनाशङ्कया प्रसादनार्थं पादलग्नानि चन्द्रमण्डलानीवोज्ज्वलानि नखानि धार-यन्तम्[6] ॥ * ॥ बाणं शरः ॥ * ॥ द्रोणं चतुराढकोऽष्टाढको वा देश-भेदात्[7] ॥ * ॥ सुवर्णं कनकम् ॥ दुर्गस्तु स्त्रीनरलिङ्ग इत्याह[8]। सवर्ण इति शाकटायनः[9] ॥ * ॥ भूषणम् अलकारः ॥ * ॥ रणन्ति दुन्दुभयो ऽत्रेति रणम् । यथा ।[10] रणे रभसनिर्भिन्नद्विपपाटविकासिनि ॥ रभ-सेन निर्भिन्ना द्विपपाटविकानासमयो यत्र तदित्यर्थः ॥ * ॥ कार्षापण हिरण्यप्रमाणम् । अण्प्रत्यय विनापि पुंनपुसकवाचीत्यर्थः ॥ * ॥ तोरणं वन्दनमाला ॥ * ॥ काण्डः शरो नाल वर्गो वारि कुत्सित च ॥ * ॥ ताण्डवम् । उद्धत॰नृत्त[11] तृणविशेषस्य ॥ * ॥ दण्ड यष्टिस्तुर्योपायो दमो मन्थास्य ॥ * ॥ मण्डं सर्वरसाना द्रवद्रव्याणा मुख्यम् ॥ * ॥ पिटकं

---

1 शक्तु° A , सक्तुस्तटाकसृणी पोटो मच° E

2 भक्ष्यादिविशेषः D , भषविशेष. A.

3 दंश.° D , दंभपातकं च B C

4 स्त्रीपर्यां च D

5 Om B C F [? हस्तसर्पाने]

6 °द्वयोज्ज्वलनखाभि° A., D om from यथा रुद्रस्य

7 B C om ऽष्टाढको cf Weber Jyot p 81 , D om from द्रोणं

8 दुर्गस्तु नरलिंग° F

9 सुवर्णः कनकं । दुर्गे स्त्री° इत्यपि शाकटायन. A , om D [? स्वर्णं इति° or सुवर्णं masc. only]

10 D om from भूषण , Siś 19, 56

11 उद्धूतनृत्तं B , उद्धतं नृत्तं F

चरकं शास्त्रविशेषः ॥*॥ मठं व्रतिनां स्थानम् ॥*॥ विटङ्कं कपोतपाली ॥*॥[1] च्वेडितो मुखध्वनितभेदः[2] ॥*॥ भूतः पिशाचः ॥*॥ वृत्तः शीलम् ॥*॥ प्रयुतम् । दश लक्षाः ॥*॥ घृतः । आज्यम् ॥*॥ वसन्तम् । ऋतुविशेषः[3] ॥*॥ हस्तं पाणिः ॥*॥ बुस्त मांसशष्कुली[4] ॥*॥ अपराह्णं दिवसापरार्धभागः ॥*॥ पलितः । पाण्डुराः केशाः[5] ॥*॥ फलकः खेटकम्[6] ॥*॥ कल्क[7] पापम् ॥*॥ नामा ॥*॥ अयं कर्मा[8] ॥*॥ अभिधानं नाम शब्दस्य ॥*॥ अयुतम् । दश सहस्राणि ॥*॥ शतः । संख्याविशेषः ॥*॥ तृणः शष्पः ॥*॥ नीडः कुलायः ॥*॥ यौवनो द्वितीयं वयः ॥*॥ उद्यान आरामः ॥*॥ यानो वाहनम् ॥ ६५ ॥

तीर्थप्रोथौ नलिनपुलिनस्तेनयोधौषधानि
स्थानं शूर्पं[9] निधनशयनद्वीपपुच्छायुधानि ।
यूथं गूथं कुणपकुतपक्षेमवर्णासनानि
छत्त्राकाशप्रतिसरमुखाष्टापदारण्यवर्षाः[10] ॥ ६६ ॥

तीर्थः पुण्यस्थानम् ॥*॥ प्रोथोऽश्वादीनां नासा ॥*॥ नलिनः कमलम् ॥*॥ पुलिनः सैकतम्[11] ॥*॥ स्तेन चौर्यं चौरस्य ॥*॥ योधं सुभटः । यथा सूराचार्याणाम्[12] ।

---

१ कपोतपाला चेड्डितो० B
२ मुखध्वनिभेदः. F.
३ वसन्त ऋ० B C F
४ मांसं । F , मांशष्कुली D
५ पांडुर. केश F
६ खेक B , खेठक D
७ कर्ठ A , कर्स D किर्ल्ल F
८ अयकर्मा A , अयाकर्मा C.
९ सूर्पं all MSS
१० छत्ताकाश० E and corr D ; ०प्रतिशर० C D E
११ शैकतं A , सौकत B
१२ शूराचार्याणां A., D corr स्तेनाचार्याणां

कमण्डलुर्मण्डपकुट्टिमार्बुदा-
ऽवतंसपाराः शतमानचन्दनौ[१]।
समानयूषौ दृढमूषिकौदना[२]
दिनं विमानं च वितानलोहितौ ॥ ६७ ॥

कमण्डलुः करकं कुण्डिका च[३] ॥ * ॥ मण्डप जनाश्रयः ॥ * ॥ कुट्टेन निर्वृत्तः । घञ्भावादिम[४] इत्यनेन । इमप्रत्यये । कुट्टिमो बद्धभूमिकम्[५] ॥ * ॥ अर्बुदो दशकोटिरचजो व्याधिश्च[६]। पर्वते तु पुलिङ्गः ॥ * ॥ अवतंसं शेखरम्[७] ॥ * ॥ पार. परतीरम् ॥ * ॥ शत मानाना-मस्य[८] । शतमानो भूभागविशेषः ॥ यद्वा । शतमानं रूप्यपलम् ॥ यत्स्मृतिः[९] ।

द्वे कृष्णले रूप्यमाषो धरणं षोडशैव ते ।
शतमान तु दशभिर्धरणैः पलमेव च ॥ * ॥

चन्दनो मलयजम् ॥ * ॥ समान सदृशम् ॥ * ॥ यूषो मुद्गनिर्यासः ॥ * ॥ दृढोऽविनष्टम् ॥ * ॥ मूषिकम्[१०] । आखु. ॥ * ॥ उद्यते मिश्र्यते व्यञ्जनैरिति । ओदनम्[११] ॥ * ॥ दिनो वासर' ॥ * ॥ विमानो देवतायान सप्तभूमिकगृह च[१२] ॥ * ॥ वितानो याग उल्लोचो विस्तारश्च । तुच्छवाची तु त्रिलिङ्गः ॥ * ॥ लोहित. शोणितम् । गुणवचनस्तु वाच्यलिङ्गः । लोहितो गौः । लोहिता शाटी । लोहित वस्त्रम् ॥ ६७ ॥

---

१ वतसपरा ० E , शततमान वदनौ B
२ समानयूपौ A , ०मूषकौदना I
३ कुटिका च B , कुटिका च C
४ Thus A (? घणच्), ०घणज्ञावा० B , यणवज्ञावा० C , घकवावादिम D , घनभावादिम F , cf P iv 4,20 V
५ ०भूमिका D
६ ०कोटि वचसो व्याधिश्च D
७ शेषर B F
८ शतं मानमस्य D F
९ Yājn I 363-4
१० मुषकं F
११ उद्यते मथ्यते पच्यते इत्योदनं D
१२ देवयान F , ०कं गृह च B C F

गुल्मः प्रकाण्डम्[१]। यदा। गुह्यन्ते व्याकुलीक्रियन्ते[२] पथिकसार्थास्तस्मिन्निति गुल्मः। आयस्थानम् ॥*॥ अङ्गति[३] गच्छति निर्धूमकालाग्निताभिति। अङ्गारो वह्निदग्धकाष्ठम् ॥*॥ विहार भिक्षुस्थानम् ॥*॥ ताम्यन्ति काङ्क्षन्ति तेनारीन्प्रहर्तुमिति तोमरं शर्वला[४] ॥*॥ रसम्। मधुरादिः शृङ्गारादिश्च विष वीर्यं रागश्च ॥*॥ पात्रो भाजनम्[५]। अत्रास्य पाठः प्रचुरप्रयोगापेक्षः[६] ॥*॥ पवित्रः पावनम् ॥*॥ पुरः पुरी ॥*॥ मध्यः। उदरम्।

आकर्षते वोर्ध्वमपि क्रशीयान्
अत्युन्नतत्वात् कुचमण्डलेन[७]।
ननाम मध्योऽतिगुरुत्वभाजा[८]
नितान्तमाक्रान्त इवाङ्गनानाम् ॥

बुध्नम् अधोभागः ॥*॥ मृणालो बिसम्[९]। मृणालीत्यपि दृश्यते महाकविलक्ष्येषु[१०] ॥ बिसाङ्कुर इत्यन्ये ॥*॥ मण्डलो बिम्बं भूभागविशेषश्च। यथा।

अयमनेन महोदधिभोगिना वलयितो वसुधाफणमण्डलः[११] ॥

नल शुषिर[१२] तृणम् ॥*॥ नालः पुष्करादीना दण्डः ॥ अमरमालायां तु नाल नाला स्त्रियामिति स्त्रीलिङ्गोऽभिहितः[१३] ॥*॥ प्रवाल पल्लवो विद्रुमश्च ॥*॥ उत्पलो जलजम् ॥ ६८ ॥

---

१ A om from गुल्म.
२ गुह्यते॰ क्रियते A D, गुप्यंते॰ F
३ अगति B, आयस्थाने अगति C
४ नान्यं कांचति॰ D, शर्वरा A, सर्वला F, सर्वरा B C
५ भोजन MSS, पात्र॰ C
६ प्राचुरप्रयोगोपचे C, ॰प्रयोगोपचो B
७ चोर्ध्वमपि॰ ? MSS, अभ्युन्नतत्वात् A D, कुचं मडलेन B
८ ऽपि गुरुत्व॰ A D, ॰गुरुत्वभाजा B C D F
९ विशं A D
१० दृश्यते। कविलक्ष्येषु F, । कथितलक्ष्येषु C, कथिलक्ष्येषु B, महाकविमुक्तेस्तु D
११ Anargh 7, 28, D om from यथा
१२ सुषिरं A
१३ नाल नालो स्त्रियामिति॰ B C, cf A K 1, 2, 3, 41

कारणम् ॥ * ॥ आमिषो मासम् ॥ * ॥ काशं तृणभेदः ॥ ॥ कोश धनम् । अमरसिंहस्तु कोष इत्याह[१] ॥ * ॥ कुसुमः पुष्पम् ॥ - ॥ प्रग्रीव वातायन वास्तुनिमित्तधारणं च[२] ॥ * ॥ मास त्रिंशदहोरात्रः ॥ * ॥ इक्कसः ।[३] चिक्कस यवपिष्टपर्यायम् अमरसिंहाद्याः ॥ * ॥ निर्यासं वृक्षादेर्निस्यन्दः ॥ * ॥ कलश घटः । कलशस्त्रिष्वित्यमरसिंहः[४] ॥ * ॥ अम्बरीष भ्राष्ट्रः । अमरसिंहस्तु क्लीबे[५] ॥ * ॥ कलल शुक्रशोणितपर्यायः ॥ * ॥ माषं दशार्धगुञ्जो व्रीहिविशेषश्च ॥ * ॥ करीषो गोमयाग्निः । शुष्कगोमयसंघात इत्येके[६] ॥ * ॥ कुश दर्भः ॥ ६९ ॥

मुसलमुकुलमूलाः पार्श्वपाचीवपूर्वाः[७]
कमलहलचषालाः[८] खण्डलं कुण्डलं च ।
निगडफलपलाला[९] मङ्गलं शालशीले[१०]
विषचषकविशालाः[११] पूलतैले कपालम् ॥ ७० ॥

मुसलम् । आयुधविशेषः चोदनविशेषश्च[१२] ॥ * ॥ मुकुलः कुड्मलम्[१३] । यथा विक्रमोर्वश्याम् ।

---

१ A K 3, 4, 29, 233, Kshir takes no notice of another spelling, but Râyam refers to the double spelling in Med *ânta* 5

२ सुग्रीव° वस्तुनि° A

३ क्क for क्क B C D F, इच्क्स । चिक्कस A, for चिक्कस cf A K 3, 6, 35 (यवपिष्टं Kshîr, गोधूमादिचूर्णं Rây)

४ कलशस्त्रियामित्य° C, A. K 2, 9, 31

५ A K 3, 9, 30

६ शुष्कगोमयं । संघात° शुष्कगोमयसयात:° D ; =

७ मुशल° A C, °पाचाकपूर्वाः B °पाचीकपूर्वा C F

८ °चखालाः A D, °वखालाः B C, °वषाला. E

९ निगल° A D E, निगडपलपलाला C, निगद्रपलप° B, निगमपलप° F

१० सालशीले B F, शालीले E

११ विषवषक° B C D E

१२ मुशलं° A B C, छादन B C

१३ कुड्मल A B D, om C

उदयदहिमरोचिर्ज्योतिषाक्रान्तमन्तर्-
मधुन इव तथैवापूर्णमद्यापि भाति[1] ॥

विशालो विशङ्कटम्[2] ॥*॥ पूल वद्धतृणसचयभेद[3] ॥*॥ तैलः। तिलादीनां विकारः[4] ॥*॥ कपालः। शिरसोऽस्थि। घटादिखण्डोऽप्युपचारात् ॥ ७० ॥

समरतिमिरवारा राजसूयोपवासौ
चमसदिवसकंसा वाजपेयो हिरण्यम्।
जठरदरशरीरारावकान्तारराष्ट्राः[5]
पटहगृहकवाटाः कुक्कुटाद्रौ च धाम[6] ॥ ७१ ॥

समरो रणम् ॥*॥ तिमिरः। तमः ॥*॥ वारं परिपाटिः ॥*॥ राजसूयं क्रतुः ॥*॥ उपवास भोजनच्छेदः ॥*॥ चमस यज्ञपात्रविशेषः ॥*॥ दिवस दिनम्। यथा।

प्रविश्य हेमाद्रिगुहागृहान्तर निनाय बिभ्यद्दिवसानि कौशिकः[7] ॥

कंसं परिमाणभेद.। लोहभेदो वा ॥ नृवाची तु पुलिङ्ग[8] ॥*॥ वाजपेय यागः[9] ॥*॥ हिरण्यो धनम् ॥*॥ जठरम्। उदरम् ॥*॥ दरं त्रासः श्वभ्र च[10] ॥*॥ शरीरः कायः ॥*॥ आराव शब्दः ॥*॥

---

१ Şiş 11, 51 In the second pâda, the Calc ed 1815 reads कनकचषककमेतत्प्रातराखोहितेन।, Târânâtha reads as above

२ विसंकटं F

३ तृणवद्धसचयभेद. A, वद्धतृणसंचयः F

४ तिलादीनां कार B C

५ °शरीराव° D E, कांतारा राष्ट्राः A

६ कुक्कुटाद्रौ° A, कुर्कुटाद्रौ° B, कुर्कुटाद्रौ C, कुक्कुराद्रै वि। धाम D-

७ Şişup 1, 53

८ लोहभेदनृवाची° B C, [कस.। चषको मक्षिका पारी च Kshîr, A K 2, 9, 32] D om from लोह°

९ यज्ञविशेष C, B om from वाजपेय

१० श्वभ्र च A, श्वचं च B, श्वसं च C, चेर्च च D

कान्तारो महारण्यं दुर्गपथश्च ॥ ॥ राष्ट्रम् । जनपद उपद्रवश्च । पराद्राष्ट्रभयम्[1] ॥ ॥ पटह डिण्डिम ॥ ॥ गृहो दास । गृहा पुंसि च भूम्न्येवेति कश्चित्[2] ॥ ॥ कं शिर पाटयति मविपताम् । कपाटिमात । कपाटो द्वारपिधानम्[3] ॥ ॥ कुक्कुटं ताम्रचूड । चम रविवस्त कुकुट पुंस्येवेत्याह[4] ॥ ॥ आर्द्रं शृङ्गवेरम् ॥ ॥ धाम गृह तेजश्च ॥ ७१ ॥

पद्माषाढकपित्थयष्टिकफुलान्यम्भोजवाजामृता[5]
स्थूलद्यूतसलीनलोहकवचाशोकक्षयानेकपाः ।
शङ्खखण्डकधर्मचर्मरजतक्ष्वेडासिहंसापरा-
साराः सैन्धवमध्यमाध्वरधनुर्मानस्तनस्यायश्च ॥ ७२ ॥

पद्मो जलजम् । निधिवचनस्तु पुंल्लिङ्ग एव । यथा श्रीहर्षस्य ।

मञ्जिष्ठास्तनबिन्दुलाञ्छितकुचौ प्रीतिं दधत्या कृशा[6]
याताया विगलत्पयोधरपटाक्रान्तं क्वचित्कामपि ।
मद्यासाद्भ्रमसज्जनोरिव करत्पर्याक्सरद्यं गता
यश्चैते[7] मुकुलीभवन्ति सहसा पद्मास्तदेवाद्भुतम् ॥

यथा वा कुमारसिंहस्य[8] ।

---

१ परराष्ट्रभयं C.

२ Viz Amaras 2, 2, 5.

३ कं शिर पाटयति मविपता क-पाटो द्वारपट्ट । कपाटिमात्वत्‌ Kshir on A K 2, ~ 17 —Vardh. does not give the *pepld* in thl work.

४ A K 2, 5, 17

५ पद्मषाढक F पद्माषाढकपि त्थयष्टिक A.

६ Priy d rs ka (al 5. 1031) 2, 7 ; दृहत्या for दधत्या ed. ; कृशा यताया A. ; कृशी या F ; कृशो यो विग° B. ; कृशी या विगलत् C. ; कृशोर्याता विगलमत्पयो D ; पयोधरपटक्रान्ता° MSS.

७ पैते पद्मु° ed. Calc ; पश्चैते B पर्पैते C. ; पर्पैते D ; °मुपुलीभ° A मुपुलीभ° D.

८ कमारसिंहस्य C.

सपिण्डिताङ्गावयवा उदीयुः पद्मा नवाः कण्टकितोर्ध्वदण्डाः[1]।
अन्तर्जलावासविरूढशीतत्रस्ता वसन्तातपकाम्ययेव[2]॥

आषाढम्। व्रतिना दण्डं मासश्च ॥ * ॥ कपित्थो वृक्षविशेषः ॥ * ॥ षष्टिकं व्रीहिभेदः ॥ * ॥ कुलोऽभिजनो गृहं च ॥ * ॥ अम्भोजः कमलम् ॥ * ॥ वाजं पिच्छम्[3] ॥ * ॥ अमृतम्। सलिलं[4] सुधा मोचो हृद्यं च ॥ * ॥ स्थूलं दृढः ॥ * ॥ द्यूतो दुरोदरम् ॥ * ॥ खलीनं कविकम्। खलिनेति[5] शाकटायनः ॥ * ॥ लोहोऽयःप्रभृतिद्रव्यविशेषः ॥ * ॥ कवचः संनाहः ॥ * ॥ अशोक तरुविशेषः ॥ * ॥ चयं गृहम् ॥ * ॥ अनेकपं हस्ती ॥ * ॥ शङ्खः कम्बुः। निधिललाटास्थिवचनस्तु पुंलिङ्ग एव ॥ * ॥ तण्डकम्। छन्दोगयोग्यो ब्राह्मणो ग्रन्थविशेषः[6] परिष्कारो दण्डको वा ॥ * ॥ धर्मोऽदृष्टार्थवाची[7]। तत्साधनवाची तु नपुंसकलिङ्गः[8]। तानि धर्माणि प्रथमान्यासन्[9] ॥ अमरसिंहस्तु धर्ममस्त्रियामिति[10] पठन् सामान्येनाह। धर्माः पुण्ययमन्यायस्वभावाचारसोमपा इति च[11] ॥ * ॥ चर्मोऽजिनम् ॥ * ॥ रजतो रूप्य श्वेत च ॥ * ॥ स्नेहं सौहृदम् ॥ * ॥ असि खड्गः ॥ * ॥ हंस सितच्छदः ॥ * ॥ अपरोऽपरमन्यत् ॥ * ॥ सारो

---

1 कंटकितांगदंधा A

2 अतजला च। सविवृद्धशीतत्र आतप° A, °काम्ययैव C F, अतज्ञालावातवलद्धशीतत्रस्ता वसानातप° D

3 पित्थं B, पिछं D

4 शलिलं B C D, सलिला A

5 खनितेति A

6 C om from कवच सनाह°, °परिस्कारो B C D

7 धर्मो दृष्टार्थवाची B C

8 तत्साधनवाची च पुंलिंग। A D

9 Rigv 1 164, 43, V S 31, 16

10 A. K 1, 1, 4, 2, धारणाद्धर्मे। यागाङ्गे नपुंसकम्। तानि धर्माणि प्रथमान्यासन् ॥ फले तु पुमान्। एष धर्मः सनातन। इति विशेषोऽस्य नेष्टः। लोकधर्मो नाव्यधर्मोति पारिभाषिको धर्मोशब्दोऽप्यस्ति। Kshir

11 A K 3, 4, 141, पुण्य.। यागाद्यहिंसा वा ॥ यमो धर्मराज। धर्मस्तु भीमवत् ॥ न्याये च। धर्माधिकारिण. ॥ स्वभावे यथा क्रूरधर्मा ॥ आचारे यथा धर्मशास्त्रम् ॥ सोमपे यथा। एष धर्म. सनातन ॥ युधिष्ठिरपितापि तावदेव ॥ धर्मसाधने यागादौ च क्लीबे। यच्छ्रुतिः। तानि धर्माणि प्रथमान्यासन्। Kshir

महिम महत्त्वम् ॥ * ॥ नेत्रकः शृङ्खलकम् ॥ * ॥ पञ्चकः पञ्चकं विस्तारः ॥ * ॥ दण्डकं छन्दोविशेषः ॥ * ॥ क्रकचः करपत्रम् ॥ * ॥ शम्बल[1] पाथेयम् ॥ * ॥ कुण्डपं क्रतुविशेषः ॥ * ॥ कन्दरं दरी ॥ * ॥ कटकः सैन्यम् । यथा सागरचन्द्रस्य ।

कटकः कण्टकान्यस्य दलयामास निर्दयम् ।
स हि न क्षमते किंचिद्विन्दुनाप्यात्मनोऽधिकम्[2] ॥

वलयं भूभृन्नितम्बस्य[3] ॥ * ॥ मालको ग्रामान्तरालाटवी ॥ * ॥ मर्मरं शुष्कपत्रध्वनिः ॥ * ॥ दैवतो देवः ।

यथाय दारुणाचार. सर्वदैव विभाव्यते ।
तथा मन्ये दैवतोऽस्य पिशाचो राक्षसोऽथवा[4] ॥

शिखरोऽग्रम् । यथा ।

अगस्त्याज्ञासद्यःशमितविकलोच्छ्रायविषमान्
उदस्यन्तः सेतावलगितवतो विन्ध्यशिखरान्[5] ॥

केशरः[6] किञ्जल्कम् । यथा ।

संपिण्डीकृतजीर्णजीरककणश्रेणीश्रियः केशरान्
सनद्धे परितो निरन्तरदलद्रोणीनिवेशैस्त्रिभिः[7] ॥

दारु काष्ठम् । केचिद् दार्विति नपुंसकमेवाहुः ॥ * ॥ भगंदरो रोग. ॥ ७३ ॥

---

१ सवलं D, om क्रकचः करपत्रं

२ कटकै कंट० D, कटक कटका-न्य० C, ०क्षमति० B

३ A D add यथा। तनुत्वरमणीयस्य मध्यस्य च भुजस्य च। अभवन्नितरां तस्या वलय कान्तिवृद्धये ॥ transferred here by mistake from the comment on सलय in sl. 68 above; cf p 106, n 6

४ सर्वदैव० C, दैवतोऽस्य A C This sloka is quoted by Mammaṭa on Kâvyapr 7, 3

५ Anarghar 6,32, ०विपुलोच्छ्राय० ed. Calc p 166, D om. from यथा.

६ केसरं F.

७ Bâlarâm 5, 27 (संनद्धं ed. Ben.).

सौधः सुधाधवलितम् ॥*॥ रेणुर्धूलिः ॥*॥ तलोऽधो रूपं च ॥*॥ लोमा तनूरुहम् ॥*॥ पटं वस्त्रविशेषः ॥*॥ विहायः। आकाशम् ॥ ७४ ॥

उटजचापनपुंसकपातका
भुवनकोटरपल्लवगोमयाः।
अतिखरं हरिचन्दनमूलकौ
भवनसंक्रमगाण्डिवपत्तनाः ॥ ७५ ॥

उटजः पर्णशाला ॥*॥ चापो धनु । यथा परिमलस्य।

विपक्षदृङ्मङ्क्षुता नितान्तं भ्रूलेखया कुञ्चितयोल्लसन्त्या।
नाकारमात्रेण परतपस्य यस्यान्वकारि क्रिययापि चापः[1] ॥

नपुंसकं शण्ढः। स नपुंसकोऽभवदिति भाष्यकारवचनात्पुंस्यपि ॥*॥ पातकः पापम् ॥*॥ भुवनो लोकः ॥*॥ कोटरं निष्कुटः ॥*॥ पल्लवं किशलयम्। यथा।

लोलौष्ठमोष्ठकमुदग्रमुखं तरूणाम्
अभ्रलिहानि लिलिहे नवपल्लवानि[2] ॥

गोमयः करीषः ॥*॥ अतिखरम्। अर्थस्तु लोकादवसेयः ॥*॥ हरिचन्दनम्। हरेरिन्द्रस्य चन्दनो हरिचन्दनः। स चातिपीतः शीतस्य[3] देवदृक्षस्य ॥*॥ मूलक शाकविशेषः ॥*॥ भवनो गृहम् ॥*॥ सक्रमः। दुर्गसचर सेत्वादिः ॥*॥ गाण्डिर्विद्यते यस्य। गाण्ड्यजगात्संज्ञायामित्यनेन[4] वप्रत्यये। गाण्डिवोऽर्जुनधनुः ॥*॥ पत्तनोऽधिष्ठानम्[5] ॥ ७५ ॥

---

१ परंतपस्य यस्याध्वकारि° A, D om from यथा परिमलस्य।

२ Śis 5, 65, D has the whole verse, but corrupt

३ शीतलस्य D, °पीतशीतस्य A.

४ Pân v 2, 110

५ D om from मो दुर्गसंचर. सेत्वादि.

कोलाहलः ककुभजानुभगाब्दवेषा
　　वित्तस्वभूर्जलशुनाः शललं च गेहम् ॥ ७७ ॥]

मञ्जीरो हंसकम् ॥ * ॥ नूपुर तुलाकोटिः ॥ * ॥ शफं[1] खुरः ॥ * ॥ अणुः सूक्ष्मपरिमाणविशेषोऽन्नविशेषस्य ॥ * ॥ तरण्डं प्लवः ॥ * ॥ मेढ्रं मेहनम् । यथा । ह्रस्वं वृत्तं मृदु स्थूलं मेढ्रं शस्तं[2] महासुखं ॥ * ॥ संसारं जगत् ॥ * ॥ चूर्णं चोदः ॥ * ॥ वटं तुल्यता गोलस्य[3] ॥ * ॥ वासरं दिनम् । यथा ।

वासराणि कतिचित्कथंचन स्थाणुना पदमकार्यत प्रिया[4] ॥

जन्तुसत्त्वेति । जन्तौ प्राणिन्यभिधेये सत्त्वं पुनपुंसकं भवति । यथा । वन्यान्विनेष्यन्निव दुष्टसत्त्वान्[5] ॥ जन्ताविति किम् । सत्त्वं द्रव्यं प्रकृतिगुणस्य ॥ * ॥ कोलाहलम् । अव्यक्तो ध्वनिः ॥ * ॥ ककुभो वीणावादनम् ॥ * ॥ जानु । अष्ठीवान् । यथा । जानुमस्य गृह्णीयात्[6] ॥ * ॥ भगं योनिः ॥ * ॥ अब्द संवत्सरः ॥ * ॥ वेषो नेपथ्यम् ॥ * ॥ वित्ते स्वम् । वित्ते वाच्ये स्व पुंनपुसकम् । स्वाः । स्वानि ॥ * ॥ भूर्जो वृक्षविशेषः ॥ * ॥ लशुनः । रसोनः स्निग्धसोष्णस्य लशुनः कटुको गुरुः ॥ * ॥ शलल सल्लकसूची[7] ॥ * ॥ गेह वेश्म ॥ * ॥ अरुणदत्ताभिप्रायेणैते दर्शिताः ॥ ७७ ॥ इत्यर्धर्चादिः ॥

　　राजदन्तार्पितोतावक्लिन्नपक्वपरःशताः ।
　　नृवरोऽप्येवर्णं भृष्टलुञ्चितो लिप्तवासितः[8] ॥ ७८ ॥

राजदन्तादौ समासे पूर्वनिपातो न भवति[9] । दन्तानां राजा ।

---

१ शिफं B C
२ मेढ्रः शिश्नं F, cf Brihats 68, 7-8
३ गुलकस्य B C
४ Kum 8 8, 13
५ Raghuv 2, 8
६ मृद्नीयात् B, मृह्णीयात् F
७ सललं सल्लकपूर्वं C
८ पक्वपर.° नृवराप्यवर्ण° A
९ F om न भवति

यच्छृष्टलुञ्चितशशेव शशाङ्कपात्री[1] ॥ * ॥

पूर्वं वासितं भावितं पश्चाल्लिप्तं दिग्धं लिप्तवासितं। अनयोरेकादिसूत्रेण। यथा। यल्लिप्तवासितमिव द्युमदोऽञ्जवातैः ॥ ७८ ॥

**उप्तगाढकुरुश्रेष्ठौ सिक्तसंमृष्टसंयुतौ[2]।**
**उत्तमर्णाधमर्णौ च परःसहस्र इत्यपि ॥ ७९ ॥**

पूर्वं गाढम् अवलोडितं पश्चादुप्तम् उप्तगाढम्। अत्रैकादिसूत्रेण। यथा। व्योमोप्तगाढमिव भानुमरीचिसस्यम्[3] ॥ * ॥ कुरुष्वासौ श्रेष्ठश्च। कुरुश्रेष्ठः ॥ * ॥ पूर्वं सम्मृष्टं पश्चात्सिक्तम्। सिक्तसंमृष्टम्[4] ॥ सिक्तसमृष्टमित्यन्ये[5] ॥ अत्रैकादिसूत्रेण। यथा।

यत्सिक्तमृष्टमसृणेव नभोऽङ्गणश्री.[6] ॥

ऋण उत्तमः। उत्तमर्णः ॥ ऋणेऽधमः। अधमर्णः। अत्र सप्तमी शौण्डैरित्यनेन[7] ॥ * ॥ सहस्रात्परे। परःसहस्राः। अत्र पञ्चमीत्यनेन ॥ शतसहस्रावित्युपलक्षणम्। तेन

परोरजोभिः स्वगुणैरगाधं सगाधिपुत्रोऽपि गृहानुपैति[8]।

इत्यपि सिद्धं भवति। पृषोदरादावप्येतद्द्रष्टव्यम्[9] ॥ ७८ ॥

**कुबेरकेशवौ श्रद्धातपसी विष्णुवासवौ।**
**सोमरुद्रौ शिरोजानु चित्रास्वाती शिरोविजु[10] ॥ ८० ॥**

---

१ यल्लिप्तवासितमिव द्विपदोञ्जवातैर्यत्सिक्तमृष्टमसृणेव नभोगणश्रोः यच्छृष्टलुचितशसेव शशाकपात्री तत्प्रातरासभके। दिवचालसूर्यं । D

२ Thus D E, सिक्तसंसृष्टसंयुतौ A B C F

३ °शस्यं A D, C om from पूर्वं गाढं to कुरुश्रेष्ठ.

४ पूर्वं संसृष्टं° सिक्तससृष्टं MSS

५ °समृष्टमित्यन्ये C, । समृष्ट° F

६ नभोगणश्री A, ऽगण. श्री. B

७ Pân ii 1, 40

८ Anarghar (Calc S 1782) 1, 21

९ एतत्सिद्धं द्रष्टव्यं F, cf sl 145 6

१० °चित्रस्वाती° F, शिरोविजु B C F, शिरोविदु A, शिरोविज्ज D,

कुबेरस्य त्र्यम्बकस्य । कुबेरत्र्यम्बकौ । पूर्वद्वारेण ॥०॥ मद्रा च तपश्च । मद्रातपसौ । सपुद्द्वारेण ॥०॥ विष्णुश्च वासवश्च । विष्णुवासवौ । वर्णभ्या देवतानामनुपूर्वमित्यनेन[1] ॥०॥ सोमश्च रुद्रश्च । सोमरुद्रौ । पूर्वद्वारेण ॥०॥ शिरश्च जानु च । शिरोजानु ॥०॥ शिखा च ग्लानिश्च । शिखाग्लानी ॥०॥ शिरश्च बिन्दुश्च । शिरोबिन्दु ।[2] बिन्दुर्ग्रीवा स्कन्धो वा । अपलिपुद्द्वारेण[3] । सोमस्य शिरोबिन्दू[4] इत्यादि ॥ ८० ॥

जंपती दंपती जायापती पुत्रपती तथा ।
गौपालिधानपूलासविष्वक्सेनार्जुना मताः[5] ॥ ८१ ॥

जाया च पतिश्च । जंपती । दंपती । जायापती । इह पाठाज्जायाशब्दस्य जंभावश्च[6] ॥ ॥ पुत्रश्च पतिश्च । पुत्रपती । एषामपलिपुद्द्वारेण ॥०॥ गां पालयतीति गोपालः । तस्यापत्यं गौपालिः[7] । धीयते यस्मिंस्तद् गौपालिधानम् । पाशोऽवस्थानं वा[8] ॥ पूलानवतीति पूलासः ॥ गौपालिधानं च पूलासश्च । गौपालिधानपूलासम् ॥ अल्पाच्द्वारेण[9] ॥०॥ विष्वक्सेनश्चार्जुनश्च । विष्वक्सेनार्जुनौ । अल्पाच्द्वारेण[10] । यदा पूज्यता न विवक्ष्यते तदा परनिपातार्थं पाठः । अथवा । विष्णोरन्यो विष्वक्सेनः ॥ ८१ ॥

---

१ Cf. Pāṇ. II. 2, 34, Vā. 5, 6.

२ शिरोबिन्दु । A. B. C. F; बिन्दुर्ग्रीवा॰ A. B. C; बिन्दुश्च । शिरोबिन्दु । बिन्दुर्ग्रीवा॰ D

३ पुत् (MSS mostly पु) prātip. in ह and ष; cf. Pāṇ. II 2, 32

४ शिरोबिन्दू A; शिरोबिन्दु D

५ गौपालिधान॰ A.

६ जाया च पतिश्च जायापती । C.

७ गौपालि॰ A.

८ पाशो वा अवस्थानं वा A. D.; पाशोऽव॰ F

९ Cf. Pāṇ. II. 2, 34.

१० A. and B read this reference generally अल्पाच्तरेण; B. C. and F throughout अल्पाच्तरद्वारेण. [D here अल्पाच्तरद्वारेण॰ and once अल्पाच्तरा॰] cf. P. II. 2, 33.

वैकारिमतं तण्डुलकिण्वावन्त्यश्मकाश्च दारगवम्।
केशश्मश्रु स्नातकराजानौ नग्नमुषितश्च ॥ ८२ ॥

विकारस्यापत्य वैकारिः। स च मतश्च। वैकारिमतम्। अल्पाज्दारेण॥ शाकटायनस्तु वैकारेर्मतो वैकारिमतः। गाजयतीति गाजः। वाजयतीति[1] वाजः। गाजश्च वाजः। गाजवाजः[2]। वैकारिमतश्च गाजवाजश्च। वैकारिमतगाजवाजमित्याह ॥ * ॥ तण्डुलाश्च किण्वं च। तण्डुलकिण्वम् ॥ * ॥ अवन्तिर्नाम राजा जनपदो वा। अश्मका नाम जनपदः[3]। अवन्तयश्चाश्मकाश्च। अवन्त्यश्मकम्। अजाद्यद्दारेण ॥ * ॥ दाराश्च गौश्च। दारगवम्। अल्पाज्दारेण ॥ * ॥ केशाश्च श्मश्रु च[4]। केशश्मश्रु ॥ केशश्मश्रू[5] इति भोजः ॥ असखियुद्दारेण ॥ * ॥ स्नातकः समाप्तवेदः। स च राजा च। स्नातकराजानौ। अल्पाज्दारेण ॥ * ॥ पूर्वं मुषितः पश्चान्नग्नः। नग्नमुषितः। यथा।

चौरास नग्नमुषितेव हृतेऽरुणेन[6]।

एकादिसूत्रेण ॥ ८२ ॥

दृषदुपलं पुत्रपशू पूलासकुरण्डगाजवाजानि[7]।
आरद्वायनिचान्धनिसिञ्जास्थोशीरबीजानि[8] ॥ ८३ ॥

दृषच्चोपलं च। दृषदुपलम्। अजाद्यद्दारेण ॥ * ॥ पुत्रश्च पशुश्च।

---

१ वाजयतीति C

२ गाजस्य वाजस्य गाजवाजं F

३ अश्मकोंवाजनाम जनपदः A, अश्मको नाम० F

४ श्मश्रुस्च B C F

५ केशश्मश्रु A, om C, B om केशश्मश्रु

६ नमसुखिते० F, हृतेऽरु० A B C D

७ पूलाश० B C.

८ आरद्वानिचांधविशिजा० A, आरद्वापनि० D, आरद्वायनिवांधनि० E, आरट्टायनि० D C F—Cf śl. 83 (आरट्टस्य। आरट्टी?) and 231 (*tikādi* where MSS and Kāś. V आरद्वायनि!)

पुत्रपशू । अनयोरिषुद्वारेण ॥ • ॥ पूलासश्च कुरण्डश्च । पूलासकुरण्डम्[१] ॥ शाकटायनस्तु कुरण्डानां सम कुरण्डसमम् । कुरण्डसमं च पूलासश्च । कुरण्डसमपूलासमित्युवाच[२] ॥ • ॥ गाजश्च वाजश्च । गाजवाजम् ॥ अन्यस्तु । गजानां समूहो गाजम् । वाजिनां समूहो वाजम् । गाजं च वाजं चेति गाजवाजम् । तत्प्रत्ययस्तु[३] गणपाठादेव न भवतीत्याह ॥ अनियमप्रसङ्गे वाजशब्दस्यैव परनिपात ॥ • ॥ चारट्टतीति । चारट्टो नाम कश्चित् । तस्यापत्यम् चारट्टायनि[४] । तिकादिभ्यः फिञ्[५] ॥ बन्ध भक्ष्य बन्धक । तस्यापत्य बान्धकि[६] ॥ चारट्टायनिश्च बान्धकिश्च । चारट्टायनिबान्धकि[७] । अस्याजद्वारेण ॥ कश्चित् चारट्टायनिबन्धकीत्याह[८] । पाणिनिस्तु । चारट्टायनिबन्धकीत्याह[९] ॥ • ॥ शिम्बन शिम्बा । आस्थानम् आस्था । शिम्बा चास्था च । शिम्बास्थम् । अनानियमे प्राप्ते नियम ॥ • ॥ उशीर च बीज च । उशीरबीजम् ॥ शाकटायनस्तु । उशीरं बीजं यस्मिन् । उशीरबीजो नाम पर्वत । शिम्बायां तिष्ठतीति शिम्बास्थ पर्वत । उशीरबीजश्च शिम्बास्थश्च । उशीरबीजशिम्बास्थम्[१०] ॥ अस्याजद्वारेण ॥ ८६ ॥

---

१ °कुरंडं A.; पूलास twice B C.

२ A thrice कुरंड° (om. कुरण्डानां सम); B C. twice पूलास

३ तत्प्रत्ययस्तु A.; तत्प्रयोजनस्तु C.; तत्' प्रत्ययस्तु B; A om. from गाजं च to गाजवाजम्

४ चारट्टो चारट्टायनि A.; D corr चारट्टा चारट्टायनि (orig ?); चारट्टो चारट्टायनि B. C. F; cf. p. ११३ note ८

५ फिञ् A B (tiddhi al. 231).

६ बन्ध भक्ष्य बाधकि A.; बन्धभक्ष्य F.; बन्ध बन्ध C.; बन्ध बंधनीत्याह D

७ चारट्टायनि twice B. C. F; चा-रट्टायनिश्च रोधनिश्च चारट्टायनिबा धनि L.

८ F चारट्टायनबाधनीत्याह A.; D om from चारट्टायनिश्च but see note ६

९ चारट्टा B. C. F; A. D om. from पाणिनिस्तु [gaṇa Pān. II. 2, 31 चारट्टायनिबन्धकी; Id. Kāś. V ed.; MS. I O 2440 चारट्टायनबंधकी; MS. Beng As. Soc चारट्टायनिबंधुकी]

१० उशीरबीजश्च उशीर° D

विषयेन्द्रियाधरौष्ठाः स्थलपूलासं च दारजारौ च ।
भार्यापती उलूखलमुसलाक्षिभ्रुवगजाश्वशूद्रार्याः[१] ॥ ८४ ॥

विषयास्चेन्द्रियाणि च । विषयेन्द्रियाणि । अजाद्यद्दारेण ॥ * ॥ अधरश्चौष्ठश्च । अधरौष्ठम्[२] । अल्पाज्द्दारेण ॥ * ॥ स्थल च पूलासश्च[३] । स्थलपूलासम् ॥ * ॥ दारयति हृदयमिति दारः । जरयतीति[४] जारः । दारश्च जारश्च । दारजारौ । अत्रानियमप्रसङ्गे दारशब्द एकवचनान्तोऽपि दृश्यते । यथा । धर्मप्रजासपन्ने दारे नान्यं कुर्वीत ॥ * ॥ भार्या च पतिश्च । भार्यापती । असखियुद्द्दारेण ॥ * ॥ उलूयन्त इत्युल्वो धान्यानि । आप्ये क्विप् । उल्वः[५] खल्यन्ते संचीयन्ते प्रचिप्यन्त इति । उलूखलम् । तच्च मुसल च । उलूखलमुसलम्[६] ॥ * ॥ अक्षिणी च भ्रुवौ च । अक्षिभ्रुवम् । अत एव पाठात्समासान्तः ॥ अनयोरल्पाज्द्दारेण ॥ * ॥ गजश्चाश्वश्च । गजाश्वौ ॥ * ॥ शूद्रश्चार्यश्च । शूद्रार्यौ ॥ अनयोरजाद्यद्दारेण ॥ ८४ ॥

काकमयूरौ मेधातपसी दारार्थपाण्डुधृतराष्ट्राः ।
नरनारायणदीक्षातपसी चित्ररथबाल्हीकौ ॥ ८५ ॥

काकश्च मयूरश्च । काकमयूरौ ॥ * ॥ मेधा च तपश्च । मेधातपसी । अनयोरर्च्यलघुद्दारेण[७] ॥ * ॥ दाराश्चार्थश्च । दारार्थम् । अजाद्यद्दा-

---

१ °उदूखल° A B D, मुशला° A B C F

२ अधरश्च ओष्ठं च °D, अधरोष्ठं B C F

३ पूलासं च C, °श्व° D

४ जारयतीति A D, thus also MS Kshîr on A K 2 6, 1, 35

५ उलूयत इति° D, इति उल्ला° उल्लु. C, इति उल्लो° उल्लु. F

६ °उदूखल° A B D F, °मुशल° A B C F throughout.

७ अनयोरर्थ्यलघु° A perhaps right, °अनयोरपालघुद्द्दारेण D, cf P ii 2, 34 Vs 3 and 4

रेण ॥ पाण्डुश्च धृतराष्ट्रश्च । पाण्डुधृतराष्ट्रौ । वर्णभ्रातृणामनुपूर्व-
मित्यनेन ॥ ७ ॥ नरश्च नारायणश्च । नरनारायणौ ॥ ७ ॥ दीक्षा च
तपश्च । दीक्षातपसी ॥ अनयोरर्थलघुद्वारेण[1] ॥ ७ ॥ चित्ररथश्च बा-
ह्लीकश्च । चित्ररथबाह्लीकौ राजानौ । अल्पाच्तरेण । पाणिनि-
मतमतेन ॥ शाकटायनस्तु बह्लो ऽस्यास्तीति बह्ली । बह्लीव बह्लिकः[2] ।
संज्ञाप्रतिकृत्योरित्यनेन[3] के । चित्ररथबह्लिकम्[4] ॥ भोजस्तु चित्र-
रथाह्लिकावश्विनौ[5] पपाठ । उणादिमध्ये तु सृणीका तितिरीक वा-
ह्लीक वल्मीक किङ्किणीका पुण्डरीक चञ्चरीक मरीक प्रतीक पूतीक
पर्करीकादय[6] इत्यस्मिन् वाह्लीकमिति प्रादर्शयत्[7] ॥ एतेषामेतै
सूत्रैः प्राङ्निपाते प्राप्ते परनिपातः क्रियते ॥ ८८ ॥

पूर्वोऽपरो धर्मतः शब्दकामाद्
इन्द्राकेनोभ्यो ऽग्निचन्द्रादयोऽपि ।
भीष्मादिर्भि द्रोणचन्द्राच राहोम्[8]
चन्द्रो भीष्मो वा वसन्तादिभाष्य ॥ ८९ ॥

पूर्वोऽपर इति न केवलं धर्मशब्दकामेभ्यः पूर्वोऽर्थशब्दः परोऽपि
दृश्यते गणपाठसामर्थ्यात् । अर्थश्च धर्मश्च । अर्थधर्मौ । धर्मार्थौ ॥

---

१ अर्थाल्पघु° D.

२ ? Thus A. (ब°); बाह्ली° बाह्ली । बाह्लीव बाह्लिकः B. C. D.; बाह्लो °बाह्ली । स एव बाह्लीकः F

३ संज्ञाप्रत्ययोः A.; cf. Pāṇ. v 3. 96-7

४ Thus A. D. F; चित्ररथबाह्लिकं B. C.

५ चित्ररथबाह्लीकाव° F

६ तृणीका D.; तितिरीक A. D.; वाह्लिक C.; B. C. F om. वल्मीक; B. om. चचरीक; चपरीक C.; C. om. प्रतीक; A. om. पूतीक; cf. Un. s. 4. 16-23.

७ प्रदर्शयति C.; प्रदर्शयत B.; प्रादर्शयत D.; प्रदर्शयत F

८ भीष्मादिभी° E.; भीष्मादिश्च द्रोण° C. F; °द्रोणचन्द्रात्मरौहोम् A.

अर्थशब्दौ। शब्दार्थौ ॥ अर्थकामौ। कामार्थौ ॥ * ॥ न केवलम् अग्नि- चन्द्रादयः पूर्वे भवन्ति परतोऽपि। अग्निश्चेन्द्रश्च। अग्नीन्द्रौ। इन्द्राग्नी ॥ * ॥ चन्द्रार्कौ। अर्कचन्द्रौ ॥ * ॥ आद्यन्तौ। अन्तादी ॥ * ॥ भीष्मद्रोणौ। द्रोणभीष्मौ ॥ * ॥ चन्द्रादित्यौ। आदित्यचन्द्रौ ॥ * ॥ राहुचन्द्रौ। चन्द्रराहू ॥ * ॥ ग्रीष्मवसन्तौ। वसन्तग्रीष्मौ ॥ ८६ ॥

शुक्रशुचिकरभरासभगुणवृद्धिसमीरणाग्निकुशकाशाः।
सर्पिर्मधुदीर्घलघू सतपःश्रुतपाणिनीयरौढीयाः ॥ ८७ ॥

शुक्रशुच्यादयः शब्दाः शकृन्मूत्रशब्दपर्यन्ता विपर्ययेणापि भवन्ति ॥ शुक्रश्च शुचिश्च। शुक्रशुची। शुचिशुक्रौ ॥ * ॥ करभरासभौ। रासभकरभौ ॥ * ॥ गुणवृद्धी। वृद्धिगुणौ ॥ * ॥ समीरणाग्नी। अग्निसमीरणौ ॥ * ॥ कुशकाशम्। काशकुशम् ॥ * ॥ सर्पिर्मधुनी। मधुसर्पिषी ॥ * ॥ दीर्घलघू। लघुदीर्घौ ॥ * ॥ सतपःश्रुतेति। सह तपःश्रुताभ्यां वर्तन्ते। सतपःश्रुताः। सतपःश्रुताश्च ते पाणिनीयरौढीयाश्च ॥ तपःश्रुते। श्रुततपसी ॥ * ॥ पाणिनीयरौढीयाः। रौढीयपाणिनीयाः[1] ॥ ८७ ॥

भीमसेनार्जुनावेतौ कपित्थाश्वत्थसंयुतौ।
शकृन्मूत्रं कृतद्वन्द्वा[2] व्यत्यासेन सतां मताः ॥ ८८ ॥

भीमसेनार्जुनौ। अर्जुनभीमसेनौ ॥ * ॥ कपित्थाश्वत्थौ। अश्वत्थकपित्थौ ॥ * ॥ शकृन्मूत्रम्। मूत्रशकृत् ॥ * ॥ एतेषां स्वीयस्वीयसूत्रेण नियमे प्राप्ते गणपाठाद्विकल्पः ॥ सतां मता इति साभिप्रायम्[3]। तेन

---

१ C has throughout रोठीय

२ सकृन्मूत्र० A, शकृन्मूत्रपर्यंता F

३ सतां मत.। मतासत। सतां मता सत्य इति साभिप्राय C, F adds वचनं.

शाण्डिल्यः । शाण्डिल्यखेलः ॥ * ॥ एतेषां गुणवचनत्वात्यचे परत्वार्थं वचनम् ॥ * ॥ इति कडारादिः ॥

एते शब्दा बहुव्रीहौ प्राप्तपूर्वनिपाताः सन्तो[१] वाहिताग्न्यादावित्यनेन पूर्वपदत्वभाजो वा भवन्ति ॥ आहितोऽग्निर्येन स आहिताग्निः । अग्न्याहितः । यथा च भट्टिकाव्ये ।

अग्न्याहितजनप्रख्ये विजिगीषापराङ्मुखे ।
कस्माद्वा नीतितीक्ष्णस्य संरम्भस्तव तापसे[२] ॥

यथा वा । प्रतिशरणमशीर्णज्योतिरग्न्याहितानां
विधिविहितविरिब्धैः[३] सामिधेनीरधीत्य ।
कृतगुरुदुरितौघध्वंसमध्वर्युवर्यैर्
हुतमयमुपलीढे साधु सांनाय्यमग्निः[४] ॥

गतोऽर्थो यस्यासौ गतार्थः । अर्थगतः ॥ * ॥ ऊढा भार्या येन । ऊढभार्यः । भार्योढः ॥ * ॥ पीतं घृतं येन । पीतघृतः । घृतपीतः ॥ * ॥ प्रियशब्दस्य केवलस्येहोपदेशादुत्तरपदमनियतम् । तेन प्रियगुडः । गुडप्रियः ॥ प्रियविश्वः । विश्वप्रियः ॥ प्रियद्विः । द्विप्रियः ॥ एतेन चाहिताग्न्यादयो गणाधीता एव ग्राह्या नाधिकप्रयोगाः[५] । तेनाहितवसुरित्यादौ यथाप्राप्तं स्यान्न विकल्पः ॥ ९० ॥

जाताद्न्तः सपुत्रोऽथ तैलं मद्यं च पीततः ।
गड्वादेः सप्तमी क्तान्तं जातिकालसुखादितः ॥ ९१ ॥

---

१ सतो A D, संति C, cf P ii 2, 37

२ Bhatt 9,111, °नीतीतिजस्य° D नीतिनिष्णस्य ed 1828, B C F om from भट्टिकाव्ये to यथा वा

३ Şisup 4, 41; °विरचैै A वि-रिचै D

४ B C F om from कृतगुरु°

५ एतेन साहि° B C, नाधिकाप्र-योगा. C

दुःखजाता ॥ तृप्तोत्पन्ना । उत्पन्नतृप्ता[1] ॥ न्यासकृता सुखादयो गुणवचना इत्युक्तम् । भोजस्तु सुखादयो दश क्यज्विधौ[2] निरूपिता इत्युक्तवान् जातिग्रहणमकृत्वाकृतिग्रहणात् ॥ आकृत्या संस्थानेन व्यज्यते सा जातिः । तेनेह न भवति । आहृतब्राह्मणः । सेवितक्षत्रियः । तर्पितदासिः । प्रीणितकट इत्येके ॥ जातिपरत्व आकृतेः पूर्वनिपातः । न व्यक्तिपरत्व इत्येके[3] ॥ ९१ ॥

**ज्ञेयो जातश्मश्रुः पीतदधिच्छिन्नशीर्षपीतविषाः ।**
**क्तः प्रहरणवाचिभ्यः[4] सप्तम्यपि संमता विदुषाम् ॥ ९२ ॥**

जातं श्मश्रु यस्य । जातश्मश्रुः । श्मश्रुजातः ॥ * ॥ पीत दधि येन । पीतदधिः । दधिपीत. ॥ * ॥ छिन्न शीर्षं यस्य । शीर्षच्छिन्नः । छिन्नशीर्षः ॥ * ॥ पीतं विषं येन । विषपीतः । पीतविषः ॥ * ॥ क्त इति । प्रहरणं धनुःखड्गाद्यर्थो येषां तेभ्यः क्तान्त सप्तम्यन्तं च पूर्वं निपतति[5] । उद्यत उत्खातोऽसिर्येन स उद्यतासिः । अस्युद्यत. ॥ कलितप्रहरणः । प्रहरणकलितः ॥ दण्डः पाणौ यस्यासौ दण्डपाणिः । पाणिदण्डः । विश्रान्तन्यासकृत्त्वसमर्थत्वाद्[6] दण्डपाणिरित्येव मन्यते ॥ वज्रपाणि. । पाणिवज्रः । अविशेषोक्तावप्यसमर्थत्वात्[7] । शूलपाणिः । शार्ङ्गपाणि. । धनुष्पाणिः ॥ पाशहस्त इत्यादौ परनिपात एव ॥ आकृतिगणोऽयम् ॥ ९२ ॥ इत्याहिताग्न्यादिः ॥

---

१ तृप्तोत्पन्ना। उत्पन्नतृप्ता C D [Kāś V iii 1, 18 MSS तृप्र, ed तृप्त (var l तीव्र), but cf vi 2, 170, ed तृप्र]

२ क्यच्विधौ C, क्यङ्विधौ D F, क्यद्विधौ A, क्यङ्विधौ B, cf P iii 1, 18

३ °परात्वे° C, °परत्वे पीत्येके D

४ क्तप्रहरण° A, क्त प्रेरण° E

५ प्रहरणधनु । षड्गाद्यर्था येषां° A, प्रहरणां धनु. षड्गाद्यर्थो येषां° B, °खड्गादि । यथा एषां तेभ्य. क्तातसप्त° C

६ °न्यासकृतुरसमर्थत्वात् F

७ अविशेषात्तावपि असम° F

तिष्ठद्गु प्ररथं खलेयुसमधोनाभं समभूमि च
प्राह्णं पुण्यसमं सहद्गु विषमं प्रान्तं तथा निःषमम् ।
एकान्तं च समपदाति सुषमं तीर्थं समानात्परम्
पूतेनान्वितपूयमानखलतो लूनाद्यवं वा बुसम्[1] ॥ ९३ ॥

तिष्ठद्गु । इत्येवमादयः समासास्तिष्ठद्ग्वादिरयमित्यनेनाव्ययीभावसंज्ञा निपात्यन्ते[2] । अयमेव निपातित समासो भवति नान्यः ॥ • ॥ तिष्ठन्ति गावो यस्मिन्काले दोहाय स कालस्तिष्ठद्गु । प्रथमरात्रेरर्धं घटी । प्रावृट्काल इत्यन्ये । अयमेवेति वचनात्कथमयं भट्टिकाव्ये प्रयोगः ।

आतिष्ठद्गु जपन्संध्यां प्रक्रान्तामायतीगवम् ।
प्रातस्तरां पतत्रिभ्यः प्रबुद्धः प्रणमन् रविम्[3] ॥

तिष्ठद्गु यावद् आतिष्ठद्गूच्यते । भाष्योदाहरणाभावादयं[4] चिन्तनीय । न च समासमात्रेण न भवितव्यमित्युक्तम्[5] । अभिधानप्रमाणत्वात्समास ॥ • ॥ प्रमतम इत्यत्र[6] । प्रमत्ता प्रभूता वा इभा अस्मिन्देशे[7] । प्ररथम् ॥ • ॥ खले बुसानि यत्र काले स कालः खलेबुसम्[8] ॥ • ॥ नाभेरधोऽधोनाभं प्रहतवान्[9] । गणपाठादकारः समासान्तः ॥ • ॥ समस्तं भूमेः । समभूमि । निपातनान्मुमागमः । शाकटायनस्तु समभूमीत्याह ।

---

१ खलती° A. E; बुसं (बुसं) A. B. C. E. F; D has बुस both here and in the first pâda. Cf. not ११ p. ११२

२ तिष्ठद्गु इत्येव समासस्ति° C.; °तिष्ठद्ग्वादिरयमित्य° A; °दिरेवमित्य येन D

३ Bhaṭṭik. 4 14

४ भाष्योदाहरणाभावादयं C.

५ °मात्रेण भवितव्य° D

६ प्रमतं इत्यत्र C.

७ °प्रमत्ता वा इभा अस्मिन् वा देशे A. D; C. om प्रभूता

८ बुसानि° खलेबुसं D; cf. next page note ११

९ अधोनाभं नाभेः B.; प्रहतवान् B. C.

अन्यार्थत्वे तु[१]। समभूमयो वीथय इत्येवं यौगिकत्वेनास्य लक्षणस्य प्रवृत्तिः। अन्यार्थत्वेऽपि समभूमीति[२] केचित्॥*॥ प्रगतत्वमह्ना प्रगतमह्न इति वा। प्राह्णम्। निपातनाद् अह्नादेशः॥*॥ पुण्यत्व समायाः पुण्या समेति वा। पुण्यसमम्। पुण्येन समं तृतीयासमासापवाद इति केचित्[३]॥*॥ वहन्ति गावो यस्मिन्काले स कालो वहद्गु। शरत्काल[४] इत्यन्ये॥*॥ विगत सम विगतत्वं समस्य वा। विषमम्॥ समाद्विप्रकृष्टो हीनो वा देश इति केचित्॥*॥ प्रगतत्वमन्तस्य प्रगतोऽन्तोऽस्मिन्देश इति वा। प्रान्तम्॥*॥ निर्गत सम निर्गतत्व समस्येति वा। निःषमम्॥ समान्निष्क्रान्तो निःषममिति केचित्॥*॥ एकोऽन्तो यस्य तद् एकान्तम्॥*॥ समत्व पदाते। समपदाति। निपातनान्मुगागमः॥ समपदातीत्यपि[५] शाकटायनः॥ अन्यार्थत्वे तु। समपदातयो राजान इति यौगिकत्वेनास्य लक्षणस्य प्रवृत्तिः[६]॥*॥ शोभनाः समा यत्र स कालः सुषमम्। शोभनत्व समस्येति वा॥*॥ समान तीर्थं तीर्थस्य समानत्वमिति वा। समानतीर्थम्॥*॥ पूता पूयमानाश्च यवा यत्र काले स पूतयवम्। पूनयवमिति भोज[७]॥ पूयमानयव कालः॥*॥ खल[८] रणाजिर धान्यावपनस्थानं च। खलन्ति संचीयन्ते[९] यशांसि शूरैर्धान्यानि वा यत्र तत् खलम्। खले[१०] यवा बुशानि च[११] यस्मिन्काले

१ अन्यार्थे तु A, अन्यार्थं तु orig D, B C om तु

२ समभूमिरिति D

३ B om समं तृतीया, C om पुण्येन सम

४ सरत्काल A D

५ समपदाती। अपि A, समपदात्यपि C, समपदातीति D

६ B C F om लक्षणस्य

७ F om from पूनयव

८ ॥ खले यवा बुसानि च खल F

९ खलति° C, सचीयंते B

१० A om from स पूतयवम्

११ यवा धुनान्नि च A, D om from च। खलन्ति, A B C F read बुस throughout. The distinction between बुस and बुश was probably not intended here by the author Cf p १३२, n १

य[1] खलेयवम् । खलेबुसम् ॥ * ॥ लूना यवा यस्मिन् स लूनयवम् ॥ * ॥ वा बुसमिति चाशब्दो व्यवस्थावाची । तेन बुसशब्द एव मध्यादेव द्रष्टव्य ॥ ८३ ॥

समपक्षं पापसमं समानतीरं प्रदक्षिणं प्रमृगम् ।
अपदक्षिणं च संप्रति वासंप्रति लूयमानयवम् ॥ ९४ ॥

समानं पक्षस्य यस्य पक्षोऽस्मिन्निति वा । समपक्षं देश ॥ * ॥ पापा समा यस्मिन्नुभे काले वा । पापसमम् ॥ * ॥ समानं तीरं समानस्य तीरस्येति वा । समानतीरम् ॥ * ॥ प्रकृत्य दक्षिणतो भ्रमति । प्रदक्षिणम् । मोक्षस्य प्रदक्षिणं वाममित्याह[2] ॥ प्रकृष्टम दक्षिणाया वा । प्रदक्षिणम् ॥ ॥ प्रगता मृगा यत्र काले यतो वाऽरण्यादेशात् प्रमृगम्[3] ॥ ॥ अपगता दक्षिणा यत्र तद् अपदक्षिणम्[4] ॥ * ॥ संप्रतीति मादिसमुदायरूप शब्द । स एव नञ्संपर्कात् असंप्रति ॥ * ॥ लूयमाना यवा यत्र काले स लूयमानयवम् ॥ ८४ ॥

संहृतसंह्रियमाणाद् बुसं यवं चायतीगवाभिपने ।
अपरायण्योश्च समं दुःषममित्यप्रत्ययोऽपि गणे ॥ ९५ ॥

संहृतानि संह्रियमाणानि च बुसानि यवाश्च यत्र काले स काल संहृतबुसम् । संह्रियमाणबुसम् ॥ संहृतयवम्[5] । संह्रियमाणयवम् ॥ * ॥ दोहार्थं जलपानार्थं निपानार्थं[6] आयत्यो गावो यत्र काले स आय

१ निपायनं यस्मिन् D ; F om. from यवम् । काले

२ मोक्षस्य प्रदक्षिणं वाममि° प्रकृष्ट A ; मोक्षस्य प्रदक्षिणमित्याह D

३ D. om. यतो F om. वा । वापि यामा वारण्या[दि]हि प्रमृगं C

४ अपगता दक्षिणा अपदक्षिणं C.

५ C. D F om. संह्रियमाणबुसं । संहृतयवं (supplying यथाक्रमं?).

६ A. om. निपानार्थं

तीगवम्। यथा। आतिष्ठद्गु जपन्संध्यां प्रक्रान्तामायतीगवम्॥*॥ न विषमम्। अविषमम्॥*॥ अपरा आयत्यो वा समा यत्र काले सोऽपरसमम्। अवरसममिति भोजः[1]॥ आयतीसमम्॥*॥ दुष्टत्वं समाया दुष्टा समा वा यत्र तद् दुःषमम्। गणपाठसामर्थ्यात्स्त्रीत्वनिवृत्तिः[2]॥*॥ इच्प्रत्ययोऽपीति। इज् युद्धे इत्यनेन[3] य इज् विहितस्तदन्तः शब्दोऽत्र गणे द्रष्टव्यः। तेन परम भीम वा केशाकेशीति समासारम्भकत्व न भवति॥

तिष्ठद्गु वहद्गायतीगव लूनलूयमानपूतपूयमानयवाः[4] खलेसंहृतमह्रियमाणयववुसाद्य कालविशेषवाचिन एव गणे द्रष्टव्याः[5]॥ अन्ये तु देशवृत्तित्वमपि मन्यन्ते। तेनान्यत्र पूर्वेण बहुव्रीहिः स्यात्। तिष्ठन्ति गावो यत्र स तिष्ठद्गुः। तिष्ठद्गवो ग्रामाः॥ वहन्त्यो गावो यत्र सा वहद्गुर्हलपङ्क्तिः। वहद्गव कुटुम्बिनः॥ आयत्यो गावो यत्र स आयद्गुः॥ लूनयवेषु क्षेत्रेषु वसतीत्यादि॥ लूनयवादयस्तु प्रथमैकवचनान्ता एव प्रयोक्तव्याः। तेन द्वितीयादिका विभक्तिर्न भवति॥ सम भूमिपदातिभ्यामन्यपदार्थे[6] प्राऽहृरथमृगदक्षिणाभिरित्येताभ्या सूत्राभ्या[7] कालभावयोरेवान्यपदार्थ इष्यते। तेन समा भूमिरस्मिन्ग्रामे। समभूमिर्ग्राम। प्रगता मृगा अस्मात्। प्रमृगो देशः। प्राह्ण। प्ररथः। प्रमृग। प्रदक्षिण॥ अन्यपदार्थ एव[8]। समा भूमिः। समभूमिरित्यादौ[9] तत्पुरुष एवेति भोज॥ आकृतिगणोऽयम्। तेन यत्प्रभृति

---

१ अपरसम। अपरसममिति० A, D om from अवर०
२ ०स्त्रीत्वान्निवृत्ति A D
३ Cf Pan II 2, 37
४ ०आयतीयवलून० A B, आयत गवलू० C, ०लूनगव लुयमान० D
५ ०वाचन एव० A, I om गणे
६ समभूमिसमपदातिभ्याम० B C F
७ A C D om सूत्राभ्यां
८ अन्यपदार्थस्य D
९ ०इत्यादि। A

तन्मयतीत्यादीनामपि क्रियाविशेषणवृत्तीनां व्युत्पत्तिरनेनैव द्रष्टव्या ॥ ८१ ॥ इति तिङ्गादि ॥

ऊरीभंशकलोररीगुलुगुधाधूसोस्वधाधिःसजूर्[1]
धूलीध्वंसकलोरुरीमसमसाविश्रीफलीमस्मसा ।
ताली संशकला फलू च शकला[2] स्वाहा वषड्वौषटौ
वेताली च पपूपलीगुलुगुलाताली वितालीयुद[3] ॥ ९६ ॥

ऊर्युरीत्यादिना[4] सूत्रेणोर्यादय उक्ता आदिना सह सम बन्ते । स समासस्तत्पुरुषो भवति ॥ ० ॥ ऊरीत्यङ्गीकारे विस्तारे च । ऊरीकृत्य । अङ्गीकृत्य विस्तार्य वा वेत्यर्थः ॥ केचिद् अनुकरणविस्तारयोरिति पठन्ति । अपरे भयार्थमव्ययमप्याहुः[5] । यथा ।

तदूरीकृत्य कृतिभिर्वाचस्पत्यं प्रतायते[6] ॥ ० ॥

ध्वंसकलेति हिंसायाम् । ध्वंसकलाकृत्य । हिंसित्वेत्यर्थः ॥ ० ॥ उररी । उररीकृत्य ॥ ० ॥ गुलुगुधेति पीडायाम् । गुलुगुधाकृत्य[7] । पीडयित्वेत्यर्थः । क्रीडायामित्यन्ये । गुलुगुधेत्यन्ये[8] ॥ ० ॥ धूसीति विस्तारे । धूसीकृत्य । विस्तार्येत्यर्थः ॥ धूसी कान्ताविति शाकटायनः । अपरे धूसी काङ्क्षायाम्[9] । धूसीकृत्य । काङ्क्षां कृत्वेत्यर्थः ॥ ० ॥ स्वधेति संप्रदाने । स्वधाकृत्य स्वधामन्त्रोच्चारितमन्त्रादिकर्म[10] कृत्वा गत इत्यर्थः ॥

---

१ ऊरीध्वंस° A.; °गुलगुधा° F
२ ताली संशकला A. B. C. E. F.; ध्वंसकला° D; °शकला 1189
३ पपापलीवितालौ B. C. F.; पप तालीविपाली A.; °युद् A. D. E. F
४ ऊर्यादि° A.; ऊर्युरीत्यादिना D; ऊर्यादिना C.
५ भयार्थमव्यय B.; भयार्थमव्य C.; भयार्थमप्याहु D
६ Ms. 2, 30; वितायते A.; विधीयते D.; D has the whole stanza
७ गुलगुधेति गुलगुधाकृत्य F
८ ? Thus B.; गुलुगुधेत्यन्य A.; गुलुगुधेत्यन्ये C.; om. D. F
९ B. C. om. धूसी काङ्क्षायां
१० स्वधादिमन्त्रो° A.; स्वधा° C.

तृप्तिप्रीत्योरित्यन्यः ॥ * ॥ एवं स्वाहावषट्श्रौषड्वौषटामर्थो द्रष्टव्यः । वषट् पूजायामित्यन्यः । एतेषां संप्रदानार्थत्वात्करोतिनैव सबन्धः ॥ * ॥ आविस् । इति प्राकाश्ये । यथा ।

तेषामाविरभूद्ब्रह्मा परिम्लानमुखश्रियाम्[1] ।

आविष्करोति । प्रकटयतीत्यर्थः । आविःशब्दस्येह पाठात्सूत्रत्वे[2] धातोः प्रागेव निपातः । एवं च योऽयं प्रयोगः[3] ।

वारुणीमदविशङ्कमथाविस्सचुषोऽभवदभावित रागः ॥

इति । तथा ।　पृथुदर्विभृतस्ततः फणीन्द्रा

विषमाशीभिरनारतं वमन्तः ।

अभवन् युगपद्विलोलजिह्वा-

युगलीढोभयसृक्कभागमाविः[4] ॥

इति च सप्रमादज एव नास्त्यभ्युद्धारः[5] । आविरभवद्रागः । आविरभवन्फणीन्द्रा इति क्रियायोगस्य समीहितत्वात् ॥ * ॥ सजूरिति सहार्थे । सजूःकृत्य । सहितं साहित्येन वा कृत्वा गत इत्यर्थः । सहार्थत्वादयं कृभ्वस्तिभिर्युज्यते । आविःशब्दस्य[6] प्राकाश्यार्थत्वात् ॥ * ॥ धलीति विदूरव्याकुलीभावे[7] । धूलीकृत्य । विदूराकुलता[7] कृत्वेत्यर्थः ॥ * ॥ ध्वसकला । भ्रशकलावत् ॥ * ॥ उररी । ऊरीवत्[8] ॥ * ॥ ससमसेति ध्वसकलावत् ॥ * ॥ विक्ली फली । इति विकारे । हिंसायामिति वामनः । विकारार्थत्वात् कृभ्वस्तिभिर्युज्यते । विक्लीकृत्य ॥ अपरं आक्लौ विक्लीति विचारे । विक्लीकृत्य विचार्येत्यर्थः[9] ॥ फलीकृत्य ॥ * ॥ मससेति मसमसावत । अपरे तु मसमसा मसमसेति द्वौ सचूर्णने सवरणे

---

१ Kum S 2, 2

२ सक्तत्वे B, सत्व C, सूत्रत्वे corr D

३ एवंविधो यं० D, Sisup. 10, 19

४ Sis 20, 42, A C D om. the first half

५ इति च प्रमाद० D, नास्त्युद्धारः C

६ आविःशब्दस्य B C F

७ विद्रुर० A B, विज्वर० C

८ उररीवत् B C F

९ D om from अपरे

प्रादु. प्राकाश्ये। यथा ममैव।

नि सीमाश्चर्यधाम त्रिभुवनविदित[1] पत्तन यत्त्वदीयं
तन्मध्ये वृद्धिमीयु फलभरनमिता' शाखिन" ऽनुख्या ।
नैतच्चित्र विचित्राद्धितकृतयुग त्वत्प्रभावात् चितीश[2]
प्रादुःषन्ति प्रभूता यदि सुरतरवश्चित्रमेतद्बुधानाम् ॥

भ्वादिनेति सामान्योक्तावपि कृभ्वस्तिभिरेव योग एतेषा ममाम् ॥ * ॥ पाम्पी विस्तारविध्वसमाधुर्येषु करुणविन्नापे च। पाम्पीकृत्य। विस्तारं विध्वस माधुर्यं च कृत्वेत्यर्थ ॥ पाम्पीकृत्य। करुणं विलप्येत्यर्थ ॥ * ॥ आलम्बीति प्राकाश्ये हिंसायां च। आलम्बीकृत्य ॥ * ॥ पाम्पाली। सक्कला[3]। केवाली। आलोष्ठी। केवासी। सेवाली। आक्ली[4] हिंसायाम् ॥ पाम्पालीकृत्य। हिंसित्वेत्यर्थ[5] इत्यादि ॥ आक्लीशब्दो विकारेऽपि। आक्लीकृत्य ॥ * ॥ वार्दालीति प्राकाश्ये हिंसायां च। वार्दालीकृत्य ॥ पार्दालीति[6] कश्चित् ॥ ८७। इत्यूर्यादि ॥

साक्षाद्बीजरुहानमःप्रसहनेचिन्ताविसो रोचना[7]
बीजर्यां लवणं सह प्रतपने भद्रार्थयञ्चावमाः।
अद्धा प्राजरुहोदकं विसहने मिथ्याद्रमास्थोऽष्टमः[8]
प्राजर्यां च विकम्पने विहसने शीतंवशेप्रादुसः॥ ९८॥

साक्षादित्यादयः शब्दाश्चार्थविषयाः करोतिना सह साक्षादा-

१ निःसीमाश्चर्यधानस्त्रिभु॰ A
२ त्वत्प्रभाक चितीश। A, D om from नि'सीमाश्चर्य॰
३ सकली B
४ शेवाल्याक्ली A
५ ॰हिसाया विस्तारे च वेतालीति कश्चित्। पालीकृत्य। हिंसिकार्थ D
६ वाईालीति A, पार्द्धालीति D
७ ॰प्रहसने॰ E
८ ॰स्थो स्थम C F, ॰स्थोत्कम E

आस्थाकृता. कृतनमस्कृतयोऽर्थमर्थे-[1]
कृत्य व्रती च नृपती च नृपस्य जग्मुः ॥

अग्नौकृत्य । अग्नौ कृत्वा ।

अग्नौकृतामथ ऊतैरुदकंकृदग्राव्
आर्द्रकृते विहसनेकृति पद्मिनीनाम्[2] ॥

अग्नाविति तेच्छन्ते शाकटायनः ॥*॥ अमा । इति रहःसमवायसयोगसामर्थ्येषु । अमाकृत्य ॥*॥ अद्धाकृत्य । यथा ।

शीतंकृदर्चिषि तटीमपराम्बुधेः स-
सर्याचिकीर्षति रवावुदयाद्रिशृङ्गम्[3] ।
प्रादुष्कृता मिलितकोकयुगे मुहूर्तम्
अद्धाकृतेव वियता सरसि स्खलच्छ्रीम्[4] ॥

प्राजरुहा । इति रुहिक्रियार्थः । प्राजरुहाकृत्य पर्जन्यो निवृत्तः[5] ॥ शोभार्थ इत्यन्ये ॥*॥ उदककृत्य ॥*॥ विसहने । प्रसहनेवत् ॥*॥ मिथ्याकृत्य[6] ॥*॥ आर्द्रकृत्य ॥ आर्द्रे । इत्येकारान्तमपि कश्चित् । आर्द्रेकृत्य ॥*॥ आस्था । इत्यादरे प्रतिज्ञायां च । आस्थाकृत्य ॥*॥ प्राजर्या । इति बीजर्यावत्[7] ॥ प्राजुरा । इत्यपि शाकटायनः[8] ॥*॥ चिन्ताकृताश्रितहितोरिविकम्पनेकृत् ॥ शाकटायनस्तु विकपने[9] प्रकपने

---

१ आस्थाकृता कृत० A, आवि कृता. कृत० D

२ उदकैकृदंग्राचार्द्रकृते A, उदककृर्षदावर्थेकृते० C, ०कृदंग्रावार्द्रकते विहवने० D, अर्थेकृते वि० B, कृदग्रावर्थेकृते० F

३ तटीमपरांवुधि. ससर्था विकर्षति० C

४ मुहूर्त्तमद्दार्त्तमद्धाकृतेव० C, मुहूर्त्तमद्धाकृतेव० A, ०कोकयुगैर्मुहूर्त्तमद्धाकृतेव वियता सरति स्ख० F

५ पर्यन्यो० B, पर्यान्या० C, ०कृत्य निवृत्त D

६ उदककृत्या उत्साहनेवृत्य मिथ्याकृत्य D

७ आजर्येति० C

८ प्राजरा० C, D om अपि

९ ? विकंपने A C F, C F प्रकपने

वैरूप्ये। विकषणे हिंसायाम्। प्रकषणे[1] सताप इत्यन्ये। इत्यादि॥ विहसनेशाय॥०॥ मोतकाय॥ मोतमनारर इति शाकटायन॥० वत्र। इत्यस्मात्ये। वर्मेकाय॥०॥ मातुष्काय॥०॥

विकषणेप्रभृतीनामेजन्तत्व[2] लवणप्रभृतीनां मान्तत्वं च गणपाठ सामर्थ्यादेव। अथवा। एते सप्तमीप्रतिरूपका द्वितीयाप्रतिरूपकाश्च निपाता॥ चाक्षिताभावे। चाक्षी कृत्वा। मन्ती कृत्वा तव तावत नीत्यादि स्यात्॥ आकृतिगणोऽयम्। तेन पर्यङ्कमनस्त्रियर्याप्रभृतयो द्रष्टव्या॥८८॥ इति साक्षादादि॥

स्युर्याजकोवर्तककर्तृकारकाः
प्रयोजकोत्सादकभर्तृवर्तकाः।
अध्यापकस्थापकगोभूपूजकास्
तुर्ये परेश्वारकवेषकाविमौ[3]॥ ९९॥

याजकादिभिः षष्ठ्यन्तं सुबन्तं पदम् याजकादिभिरिक्तैरेव समस्यते। स समासस्तत्पुरुषसंज्ञो भवति॥०॥ ब्राह्मणानां याजकः। ब्राह्मणयाजकः। याजयिता॥०॥ शरीरस्योद्वर्तकः। शरीरोद्वर्तकः॥०॥ प्रयत्नस्य सर्वकर्तारम्[4]॥०॥ धर्मस्य कारकः। धर्मकारकः॥ ॥ तत्प्रयोजककर्तृत्वमुपैति सम कथ्यते[5]॥०॥ रिपूणामुत्सादकः। रिपूत्सादकः॥ इह अपवादत्व तात्पूर्व। कपिथस्योच्चारकः। कपित्थोच्चारकः इति शाकटायनः॥०॥ भुवो भर्ता। भूभर्ता॥०॥ वर्तयतीति वर्तकः। भाष्यस्य वर्तकः। भाष्यवर्तकः॥ ॥ पुष्पाणामस्थापकः। पुष्पा

[1] विकषणे हिंसायां प्रकषणे F
[2] विकषणेप्र A B C.
[3] D corr मोभपूज°, परीचारकवे चकावसौ C.
[4] Beginning of Trilochanadâsa's Kâtantravṛittipañjikâ; cf. Kât. p. 496.
[5] Sisup. 2, 71.

ध्यापकः ॥ * ॥ स्नापयतीति स्नापकः । राज्ञः स्नापकः । राजस्नापकः ॥ * ॥ धात्र्या गोपकः । धात्रीगोपकः ॥ ॥ साधूनां पूजकः । साधुपूजकः ॥ * ॥ ब्राह्मणानां तुर्यः । ब्राह्मणतुर्यः ॥ * ॥ परिचरतीति परिचारकः । गुरोः परिचारकः । गुरुपरिचारकः ॥ * ॥ परिवेवेष्टि । परिवेषकः । राज्ञः परिवेषकः । राजपरिवेषकः ॥ यद्वा । घृतस्य परिवेषकः । घृतपरिवेषकः ॥ ९९ ॥

गणको रथपत्तिभ्यां चतुर्थोन्मादकौ तथा ।
होता द्वि त्रि च तीयान्तं तुरीयोऽपि[1] सतां मतः ॥ १०० ॥

रथानां गणकः । रथगणकः ॥ पत्तीनां गणकः । पत्तिगणकः ॥ * ॥ आत्मनश्चतुर्थः । आत्मचतुर्थः ॥ * ॥ चित्तस्योन्मादकः । चित्तोन्मादकः ॥ * ॥ चौरस्य होता । चौरहोता ॥ * ॥ राज्ञो द्वितीयः । राजद्वितीयः ॥ राज्ञस्तृतीयः । राजतृतीयः ॥ राज्ञस्तुरीयः । राजतुरीयः । तुरीयोऽपि सतां मत इति साभिप्रायम् । तेन द्वितीयतृतीयेत्यादि[2] सूत्रं बृहत्तन्त्रे व्यर्थम् । गणसमाश्रयणमेव श्रेयः ।

क्रियानुगतिमास्थाय लोके ख्यातिमुपागताः ।
ये कान्ताः पावकाद्यास्ते द्रष्टव्या याजकादिषु ॥

तेन गोमयानां पावकः । गोमयपावकः ॥ गृहस्य दीपकः । गृहदीपकः ॥ पिष्टस्य मोदकः । पिष्टमोदक इत्यादि ॥ न कर्तरीति प्रतिषेधे[3] प्राप्ते पाठः ॥ १०० ॥ इति याजकादिः ॥

शौण्ड्यादौ निपुणचपलौ पण्डितान्तःप्रवीणाः[4]
स्यात् संवीतः कुशलकितवाधीनधूर्तप्रधानम् ।

---

१ चतुर्थोऽपि F
२ Pân ii 2, 3.
३ निषेधे C D
४ पंडितोतप्रवीणाः F., °प्रवीणा C

सवीतः ॥ * ॥ सेवाकुशलः ॥ * ॥ अचकितवः ॥ * ॥ जिनवचनाधीनः[1]। अधीनशब्दोऽस्मादेव गणपाठात् तस्याधीन इति ज्ञापकाद्वा खप्रत्ययान्तो बोद्धव्यः ॥ अथवा । अधिगत इनम्[2]। अधिगत इनोऽनेनेति वा । अधीनः । यथा लोकाधीनः[3] ॥ * ॥ अचधूर्तः ॥ * ॥ विबुधप्रधानम् ॥ * ॥ कार्यसव्य[4] । कार्यविषयेऽनिपुण[5] इत्यर्थः ॥ * ॥ कर्मध्यानः । कर्मसु युक्त इत्यर्थः[6] ॥ * ॥ पृथिवीप्रणवः[7] ॥ * ॥ पृथिवीविदितः ॥ * ॥ त्वचिसारः ॥ * ॥ मध्येगुरुः ॥ * ॥ कायायसः । कायविषय[8] औदरिक इत्यर्थः ॥ * ॥ काम्पिल्यसिद्धः ॥ * ॥ चक्रबन्धः ॥ * ॥ हस्तकटकः ॥ * ॥ अवसानविरसः ॥ * ॥ शिरःशेखरः ॥ * ॥ छायाशुष्कः ॥ * ॥ कुम्भीपक्वः ॥

आकृतिगणोऽयम् । तेन व्यवहारपटुः । आतपरमणीय[9] इत्यादयो द्रष्टव्याः ॥ १०१ ॥ इति शौण्डादिः ॥

ञ्युन्तात्पात्रात्समितबहुलौ[10] गेहगोष्ठात्प्रगल्भ-
क्ष्वेडिन्नर्दिन्विजितिपटवः पण्डितव्याडशूराः ।
गर्भाच्छूरः सुहितसहितस्तृप्तदृप्तौ च धीरः
पिण्डीशूरो व्रणकृमिरथो कूपमण्डूकयुक्तः ॥ १०२ ॥

पात्रेसमितादयः सप्तमीतत्पुरुषा निपात्यन्ते । क्षेपे गम्यमाने पा-

१ जितनवच° A, जन° B F, गज°C
२ इन इति C, अधिगतमिनो D
३ यतो लो° A, om C
४ ? कार्यसव्य A, कार्य मध्य B, कार्यमध्य C, कार्यभव्य D, °भव्य. F
५ अनिपुण A, orig D, °येनिपुण B C F
६ ? कर्मव्यान ।° A, °कर्मयुक्त C, कर्मसु शक्तः D, कर्मसु व्यक्त° F
७ Thus B C D F, पृथिवीप्रवीण. A—Correct प्रणव for the conjectured प्रवण in sl 101 [? Prof Roth says 'Might be a drum in the ground (cf पणव) i e a hole covered over with boards to be beaten upon, cf उपरव,' Prof Weber 'As it were a drum standing on the ground (& hence not sounding), cf Hâla Sapt 256 in Zeitsch D M Ges 28, p 412, 1 1']
८ कार्यायस ° A F, om D, कार्यविषये A D F, °उदरिक°C, औदारिक°B
९ व्यवहारपटुतरातपरमणीय F
१० Kâś V ii 1,48 ed पात्रेसंमितादि, MSS both readings, here ag metre

चेषमितादयोऽपमित्यनेनायमेव निपातित समासो भवति साम्यः। क्षमतादिति यथासमर्थं सर्वत्र संबध्यते ॥ ० ॥ पात्रेसमिता । अपचित चीरा धेनुर्या सा पात्रसमितिमात्रपर्यवसितव्यापारा सत्येवमुच्यते । तद्वदन्योऽपि च फलविकलव्यापाराडम्बर स तदुपमानात्तथा वा च्यो यथा यथा करकुटी चैव इति ॥ ० ॥ पात्रे भाजनेन समटनात्[1] चीरादिफलविकला । पात्रेबहुला । शेषार्थं पूर्ववत् ॥ अथवा । पात्र एव समिता मिलिता [2]। पात्र एव बहुला प्रचुरा । साम्यत्र कार्ये पात्रमन्येन व्यापर्यालोचनं लक्ष्यते ॥ ० ॥ गेह एव प्रगल्भः । गेहेप्रगल्भः ॥ एवं गोष्ठेप्रगल्भः ॥ ० ॥ गेह एव क्ष्वेडति विक्रमं दर्शयति । अन्यत्र भीरुः । गेहेक्ष्वेडी ॥ गोष्ठेक्ष्वेडी[3] ॥ ० ॥ गेह एव शौर्याडम्बर[4] प्रकाशयन् । गेहेनर्दी । तदुपलक्षितरन्योऽप्येवमुच्यते ॥ गोष्ठेनर्दी ॥ ॥ विजितमनेन । विजिती । यद्वा । विजितमस्यास्तीति विजिती ॥ गेह एव विजयते न प्रधुमध्ये । गेहेविजिती ॥ एवं गोष्ठेविजिती[5] ॥ ० ॥ एवं गेहेपटु । गोष्ठेपटु ॥ ० ॥ गेहेपण्डित । गोष्ठेपण्डित ॥ ० ॥ गेहेव्याड । गोष्ठेव्याड ॥ ० ॥ गेहेशूर । गोष्ठेशूर ॥ ० ॥ गर्भ एव शूरः । गर्भाद्विनिःसृत्य भीरुः । गर्भेशूर ॥ ० ॥ गर्भ एव सुखितो न तु बहिर्निःसृत । गर्भेसुखित ॥ ० ॥ गर्भ एव दृप्त समाचारहृतेनाहारेण ततो निःसृत्य न कदाचिदुदरपूरं लभतामिति[6]। गर्भेदृप्तो दरिद्र ॥ ० ॥ गर्भ एव पुष्टो मातृशेषया मातुराश्यासनेन वा ततोऽन्यत्र निःशेषा । गर्भे

---

१ संघटनात् F

२ A om मिलिता

३ गेह एव क्ष्वेडति॰ गेहेक्ष्वेडी । गोष्ठेक्ष्वेडी corr D ; om. F

४ शौर्याडम्बर A. ; शौर्यडिम्बर C. ; शौर्यमर्याडम्बर corr D

५ गेहेविजिता॰ A. ; B. C. om. from गेह एव विजयते

६ समाचारहृतेना॰ and lacuna for कदाचिदुद D. ; समाचारहृतेनाहा॰ उदरपूरं लभतामिति A ; उदरं भूत तामिति F

दृप्तः ॥ अथवा गर्भसुहितादीनामयमर्थः । योऽलीकाभिमानित्वाद-नुचितचेष्टः स एवमुच्यते ॥ * ॥ गर्भ एव धीरो गर्भाह्निःसृतस्त्वपलः । गर्भेधीरः ॥ * ॥ पिण्ड्यां खादितव्ये वस्तुनि शूरः । कलहवर्धनादिकं कृत्वा खादितव्यं खादत्यन्यत्र[1] कार्यान्तरे निर्विक्रमः स पिण्डीशूरः ॥ * ॥ व्रणमध्य एव कृमिः[2] । व्रणकृमिः । अल्पदृश्वा ॥ कृमिशब्दः संयोगादिः संयोगविकलोऽप्यस्ति । उदुम्बरे कृमिरिव । उदुम्बरकृमिः[3] । तस्मादृसादिशिष्टं रसमन्यं न वेत्ति स एवमुच्यत इति वाम्भिदाह ॥ * ॥ कूपे मण्डूक इव । कूपमण्डूकः । ततोऽन्यज्जलस्थानं सरः समुद्रं वाऽधिकं न पश्यति । तद्वदन्यः पुरुषो ग्रामे नगरे वा शास्त्रे वा प्रतिबद्धः ।[4] ततोऽन्यन्न पश्यति विशिष्टं स एवमुच्यते ॥ १०२ ॥

गेहेनन्दी गृहकलविङ्को गेहेमेह्याखनिकबकौ च[5] ।
गेहेवादी ननु नगरस्था ज्ञेयः कर्णेटिरिटिरयासौ[6] ॥ १०३ ॥

गेह एव नन्दति । गेहेनन्दी ॥ गेहेनर्दीत्यपि कश्चित्[7] ॥ * ॥ गृहे कलविङ्क इव । गृहकलविङ्कः ॥ * ॥ गेह एव मेही । गेहेमेही । य आवश्यकार्थमपि बहिर्न निर्गच्छति भोजन एव च संरभते स एवमुच्यते[8] ॥ * ॥ आखनिको जलस्रोतः खात[9] तस्मिन् बक इव । आख-

---

१ वादत्यन्यच A, खादितव्यं । खादितव्य खादत्य° C, खादना[द suppl] न्यच D

२ F throughout क्रिमि, C कृमि, A. B D now क्रिमि now छमि

३ संयोगादि संयोग° A, C om उदुम्बरे कृमिरिव, संयोगादिश्छन्दो भगभयाच दर्शित अथ च वङ्गेषु पसकेषु (lacuna of 3 syll) ष्टो (lac of 11 s) दुम्बरकृमिः । D

४ पुरुषो न ग्रामे° B, शास्त्रे वा प्रसिद्धनिर्बन्धस्ततोऽन्यतोऽन्यन्न पश्यति° D

५ गेहेमेत्याखनिकवाकौ च A

६ टिरटिरयासौ E.

७ गेहेनत्तीत्यपि° B C, गेहेनर्त्ती आवृत्त्या द्रष्टव्यं । D

८ बहिर्न्निर्गच्छति° A., C om संरभते

९ वातं A, पूरोषात D

निकषक । यस्मिंश्चिदात्मीय आत्मनिके प्रभते तन्नयति नान्यत्र गच्छति तदन्योऽपि[१]। य आत्मीये एवे यत्किंचिदपि तन्नयति[२] नान्यत्र गच्छति स एवमुच्यते ॥ अपर आह । आत्मनिरेव । आत्मनिक । कुमारचर्ये च । सम्पत्तातनिषमरेभो[३] अथाधार उच्यते तस्मिन् मञ्च । आत्मनिकवच[४]। स हि अथामयकुड्यमनुभवमागुर्य घानेन संकुचितात्मा[५] मञ्चकरन्योऽप्येवमुच्यते ॥ ० ॥ मेव एव दवनशीलो नान्यत्र । गेहेदाही ॥ ० ॥ नगरे चेव । नगरस्था एव उच्यते ॥ ० ॥ टिरिटिरा चापलेनानुचितचेष्टोच्यते ॥

मत्ता शब्द । श्रेया मत्ता मभवणपुत्रा ॥ १ १ ॥

कर्णेचुरचुरा[६] कूपकच्छपावटकच्छपा ।

गेहेमेली गृहासर्पो नगराक्काकवायसौ ॥ १०४ ॥

कर्णेचुरचुरा[७] चापलेनानुचितचेष्टोच्यते । टिरिटिरीति मत्यनुकरणम् । चुरचुरिति शब्दानुकरणम्[८]। तत्करोतीति पचाद्यच्प्रत्ययो निपातनसामर्थ्याद्दाऽलो न भवति[९]॥ शाकटायनस्तु कर्णेटिरिटिरि[१०] कर्णेचुरचुरित्याह । अनयोश्च व्याख्या । कर्णे किमपि जल्पिता यो

---

१ यदरन्योऽपि A.; D om. ऽपि

२ B. om. य; D om. यापि; F om. नान्यत्र गच्छति/

३ सम्पत्तातनिष° A.; सम्पत्तात-निपतम D; सम्पत्तात° नि° F

४ C. om. from यस्मिंश्चिदात्मीय°—

५ अथामय कुड्य° A.; °मनुभव मानुसंधानेनाभिसंकु° C.; °मथवा [मा suppl.] संकुचितपच° तदद° D

६ Thus B. C. E. F & Kāś. V. 3. 1, 48 ed. & MSS.; cf. Marāṭhī चुरचुरणें "to smart, tingle;" कर्णेचुरचुरा E; कर्णेचुरचुरा A.

७ कर्णेचुरचुरा B. C. F

८ चुरिति C.; शब्दानुकरणं D.

९ °चप्रत्ययो° D; ऽलौ न A.; सामर्थ्यादात्वं भवति F

१० कर्णेटिरिटिरि A.; कर्णेटिरि २ D

वति। नास्य विक्रम इति चेपः[1]। टिरिटिरि चुरुचुर्वित्यनुकरणशब्दौ[2] तदाकारिणि व्यवह्रियेते ॥ * ॥ कूपकच्छपावटकच्छपौ कूपमण्डूकवत् ॥ * ॥ गेह एव मिलनशीलो नान्यत्र। गेहेमेली ॥ * ॥ गृह एव सर्पः। गृहसर्पः[3]। दुष्ट इत्यर्थः ॥ * ॥ नगरे काक इव। नगरकाकः ॥ नगरे वायस इव। नगरवायसः ॥ स्वार्थनिष्ठः परवञ्चनानिपुण[4] उच्यते ॥ अथवा। नगरकाको न क्वचित्तिष्ठति सर्वमेव नगरं परिभ्रमति तद्वत्तत्रान्यत्र वाऽनवस्थितः पुरुष उच्यते ॥ १०४ ॥

**मातरिपुरुषोदुम्बरमशकौ गेहेविचित्यपि प्रोक्तः।**
**श्रमणा प्रव्रजिताथो कुलटा पटुना च मृदुनापि ॥ १०५ ॥**

मातरिपुरुषः। यः सदाचारं भिनत्ति स एवमुच्यते। यद्वा। मातरि पौरुषमवलम्बमानो मातरिपुरुषः। तत्तुल्यवृत्तिरन्योऽप्येवमुच्यते ॥ पितरिशूर इत्यपि भोजः ॥ * ॥ उदुम्बरे मशक इव। उदुम्बरमशकः। अल्पदृश्वा[5] ॥ अथवा। उदुम्बरमशकोऽल्पप्राणः सुकुमारश्च। तादृशो यः स उदुम्बरमशकः[6] ॥ * ॥ विचितमनेन। विचिती। गेह एव विचिती। गेहेविचिती। अयमर्थः। गेहे स्थित्वेदं युक्तमिदमयुक्तमिति विचिनोति निरूपयति बुद्धिमत्तां[7] प्रकाशयति न सभामध्ये कार्ये वा स एवमुच्यते ॥ * ॥ एतेषां यथासंभवं गणपाठसामर्थ्यात् सप्त-

---

१ अनयोस्त्वाव्याख्या° जीवितनास्य° A., इति शेष. D, C om from टिरिटिरिः कर्णचुरु°

२ चुरुर्वित्य° A.

३ गृहेसर्प A

४ परवचना° C, परवचनान्निपुणपुण A., D corrupt.

५ अनन्यदृश D (and श्रीभोजः as usual for भोजः), C om. अल्पदृश्वा

६ तादृशो य° D, B C om from अथवा, A om अथवा

७ बुद्धिमतां B C, and omit इदमयुक्तं

स्या भक्षुव ॥ आकृतिगणोऽयम् । तेन । उदपानमण्डूक इत्यादयो ऽनुवर्तव्या । ॥ ० ॥ इति पात्रेसमितादि ॥ ० ॥

कुमारशब्दः श्रमणादिभिर्विशेष्यैः[1] सह समस्यते । समासस्तु कर्मधारय ॥ श्राम्यतीति श्रमणा । कुमारी चासौ श्रमणा च । कुमारश्रमणा[2] ॥ ० ॥ कुमारप्रव्रजिता ॥ ० ॥ कुमारकुलटा ॥ ० ॥ कुमारश्चासौ पटुश्च । कुमारपटु ॥ ० ॥ कुमारमृदु ॥ १९ ॥

तापसीनिपुणादासीगर्भिण्यध्यापकाः स्मृताः ।
कुशलः पण्डितश्चाथ चपलश्चाभिरूपकः ॥ १०६ ॥

कुमारतापसी ॥ ॥ कुमारनिपुणा ॥ ० ॥ कुमारदासी ॥ ० ॥ कुमारगर्भिणी ॥ ॥ कुमाराध्यापक ॥ ॥ कुमारकुशल ॥ ० ॥ कुमारपण्डित ॥ ० ॥ कुमारचपल ॥ ० ॥ कुमाराभिरूपक ॥ ॥

लिङ्गपरस्य लिङ्गविशिष्टस्यापि ग्रहणमिति न्यायात् कुमारशब्दः श्रमणादिभि[3] स्त्रीलिङ्गैः स्त्रीलिङ्गः सह समस्यते । पट्वादिभिस्त्वभिधेयलिङ्गैरलिङ्गः । तेन कुमारपट्वी । कुमारमृद्वी । इत्यादि सिद्धं भवति ॥ १०६ ॥ इति श्रमणादि ॥

किंशुकः किंवदन्ती स्यात् किंकिरातश्च किंनरः ।
किंपुरुषोऽथ किंदासः किंजल्काद्या बुधैर्मताः ॥ १०७ ॥

किंशब्दस्याप्रायुक्तस्वरूपाणां विषये बाधको भवति ॥ ॥ किंशुक । पलाश ॥ ॥ किंवदन्ती । जनश्रुति ॥ ० ॥ किंकिरात[4]

[1] श्रमणादि भिः A.D. । विशेष्ये F
[2] श्रमणा च A कुमारश्रमणा D
[3] श्रमणादिभि A.
[4] किंकरातश्च A. B. C
[5] किंपुरुषो च द्वावच D. E.
[6] किंकरात A. B. C

कुरण्टकः ॥ * ॥ किंनरः । मयुः ॥ * ॥ किंपुरुषः । स एव ॥ * ॥ किंदासः । राजर्षिः ॥ * ॥ किंजल्कः । पुष्परेणुः ॥

आद्यशब्दादन्ये[1] ऽपि द्रष्टव्याः । अयं च गणः श्रीभोजदेवाभिप्रायेण ॥ १०७ ॥ इति किंशुकादिः ॥

व्याघ्रः कुब्जामहिषरुरवः[2] कुञ्जरेन्दू वराहः
सिंहो वज्रं वृषभकलशौ चन्दनं पुण्डरीकः[3] ।
चन्द्रः कुम्भर्षभकिसलयं पल्लवस्त्वृक्षपद्मौ[4]
हस्तिश्वानावृषितरुवृका बिम्बमप्यत्र लक्ष्यम् ॥ १०८ ॥

सुबन्तं पदं केनचिद्गुणेन परार्थे प्रयुक्तैर्व्याघ्रादिभिः सह गौणैर्व्याघ्रैरित्यनेन समस्यते । समासः कर्मधारयसंज्ञो भवति ॥ * ॥ व्याघ्र इव । व्याघ्रः । पुरुषस्यासौ व्याघ्रश्च । पुरुषव्याघ्रः ॥ * ॥ स्त्रीकुब्जा[5] ॥ * ॥ पुरुषमहिषः ॥ * ॥ पुरुषरुरुः[6] ॥ * ॥ पुरुषकुञ्जरः ॥ * ॥ वदनेन्दुः[7] ॥ * ॥ पुरुषवराहः ॥ * ॥ पुरुषसिंहः ॥ * ॥ वाग्वज्रः ॥ * ॥ पुरुषवृषभः ॥ * ॥ कुचकलशौ ॥ * ॥ मुनिचन्दनः ॥ * ॥ मुखपुण्डरीकम्[8] ॥ * ॥ मुखचन्द्रः ॥ * ॥ स्तनकुम्भौ ॥ * ॥ पुरुषर्षभः[9] ॥ * ॥ करकिसलयम् ॥ * ॥ पाणिपल्लवः ॥ * ॥ पुरुषर्क्ष.[10] ॥ * ॥ पाणिपद्मम् ॥ * ॥ पुरुषहस्ती ॥ * ॥

---

१ आदिशब्दाद्° A B C F

२ व्याघ्रकुंभा° A, कुचा° B C D, कुंवा° E

३ कलसौ° A E, कलभौ° B, चदन.° F

४ ? पल्लवस्तुञ्जपद्मौ A B C E (!), पल्लस' कुंभपद्मौ F, पल्लास्कुजपद्मौ D (? °तुप or तुच्छ)

५ स्त्रीकुचा B C, स्त्रीकुचा A

६ पुरुषभीरु A, पुरुषरुभ. B, अत्पभीरु D

७ F adds पुरुषेदुरित्यपि

८ °पुंडरीक B C F

९ भरतऋषभ A, पुरुषऋषभ B C F

१० ? पुरुषतुल C, पुरुषर्क्षज (i e °ऋच = ऋच ?) D, पुरुषसुल. A., पुरुषर्जढ B, om F, see note ४

ह्नजः ॥ * ॥ इन्द्रावधारिताः ॥ * ॥ देवाम्नाताः । वेदेति रत्नमतिः ॥ * ॥ क्षपणाख्याताः ॥ * ॥ विशिप गृहम् । अविशिप विशिपं कृतम् । विशिपकृतम् ॥ भोजस्तु विशिष्ट इत्याह । वामनो गण इत्यपि ॥ * ॥ निर्धनोपकृताः ॥ * ॥ ऊको राशिस्थानम् । किलिञ्चा इत्यपरे[1] । ऊकावकल्पिताः ॥ * ॥ पटूक्ताः ॥ * ॥ राशिकल्पिताः ॥ * ॥ भूतनिराकृताः[2] ॥ * ॥ श्रमणविश्रुताः ॥ * ॥ कुशलाख्याताः ॥ * ॥ कु भूमिं दुनोति । कुन्दुः । उन्दुरः ।[3] तं मीनाति हिनस्ति । कुन्दुमो मार्जारः । कुन्दुमावकल्पिताः ॥ अपरे तु कन्दुमेति पठन्ति । कन्दुः पाकस्थानम् । तस्मिन्मिनोतीति[4] कन्दुमः । अकन्दुमा. कन्दुमाः कृताः[5] । कन्दुमकृताः शालयः ॥ कुङ्कुमेति रत्नमतिः ॥ * ॥ वदान्योदीरिताः ॥

कृतादयस्तु सर्वैरपि व्याघ्रादिभिः सबन्धमनुभवन्ति । अश्रेणयः श्रेणयो विहिताः । श्रेणिविहिताः । श्रेणिनिरूपिताः । श्रेण्यासीना इत्यादयो भवन्ति । यत्र सामर्थ्यं नास्ति तत्रेति शब्दाध्याहारो द्रष्टव्यः । अनिर्धना निर्धना इत्युपकृता । अचपलास्चपला इत्यपाकृताः । अभूता भूता इति निराकृता इति ॥ आकृतिगणोऽयम् । तेन तूलकृता इत्यादयोऽपि द्रष्टव्याः[6] ॥ १०९ ॥ इति श्रेण्यादिः ॥

कृतादयस्तु यथायोगं व्याख्याताः । ते च

कृतमितभूतोदाहृतविश्रुतकलितावधारितोपकृताः ।
आस्थितनिराकृतोक्ताः संभावितमतविकल्पितासीनाः[7]
॥ ११० ॥

---

१ कलिंजा इत्यपरे B C, ओको° कलिंज इत्यपरे । ओकावकल्पिता. F

२ सूतनिराकृता. C, om A

३ कुंदुरुंदुरु. F, तं मिनोति° D, तं सीना हिनस्ति° A

४ कंदु पा° D, कदू पा° A, तन्मिनोतीति A D

५ °कंदूम° thrice A

६ तेन कृता इत्यादयो° A, तूलकृता. गणकृता इत्यादयो पि भवन्ति । अभूता भूता इति निराकृता इ° ॥ D

७ E om मत, C om the second half stanza, D om from कृतादयस्तु

सदेश ॥ ॥ सराजि ॥ ॥ सपिण्ड ॥ ० ॥ सनाभि ।

*भूपुत्रस्य सनाभिमन्मथमनुष्योत्सालिताश्च[१] ॥ ॥*

सकुक्षि ॥ ० ॥ सवेषी ॥ ॥ कश्चिनोदितसब्रह्मचर्यमध्यधीते । तीर्थग्रन्थे न पठितो मतान्तरत्वाभ्युपगतत्वात्[२] ॥ १५६ ॥ इति सदादि ॥

रूपं वर्णो नामस्थाने जातीयधर्मवचनानि ।
गोत्रं वयोऽपि लक्ष्यं चन्द्रादिमते तु रूपादौ ॥ १५७ ॥

रूपादिषूत्तरपदेषु रूपादौ वेत्यनेन समानस्य सभावो वा भवति ॥ ॥ समानं रूपं सरूपम् । समानं रूपं यस्य वा । सरूप । समानरूप ॥ ० ॥ एवं सवर्ण । समानवर्ण ॥ ० ॥ सनाम । सनामा ॥ ० ॥ सस्थानम । सस्थान ॥ ० ॥ समाना जातिरस्येति जातेरीय इतीयप्रत्यये । सजातीय । समानजातीय ॥ ० ॥ सधर्म । सधर्मा[३] । समानधर्म । समानधर्मा । *उत्पत्स्यतेऽस्ति[४] मम कोऽपि समानधर्मा*
कालो ह्ययं निरवधिर्विपुला च पृथ्वी ॥

सवचनम । सवचन ॥ ० ॥ सगोत्रम् । सगोत्र ॥ ० ॥ सवय । सवया ॥ ० ॥ चान्द्रिकास्तु भोगादेः पठन्ति । शाकटायनवामनाचार्यौ तु सभावं नित्यं सामान्येनाहतुः ॥ १५७ ॥ इति रूपादि ॥

सुषामदुःषामनिषेधदुष्टवो
दुःषन्धिदुःषेधसुषेधसुष्ठव[५] ।
नैषेचिका दुन्दुभिषेचनान्तिषन्
निःषामनिःषन्धिसुषन्ध्यषष्ठय[६] ॥ १५८ ॥

---

१ °चक्र D ; *सिततालोवनं°* A
२ तार्ह्यग्रन्थेषु ... भ्युपगतत्वात् C.
३ A and D om समानजातीय ; A. D om सधर्मा
४ Mālatīm. ed. Bh. ed. I. 6.—B. D. F. read तु for ऽस्ति. A उत्पत्स्यते । तु or । स्ति (these being alike in the MSS ? copied from स्ति) ; C. omits the first pāda.
५ सुषामनि°षामनिषेध° B. C.
६ निषाम° A. D. C. ; निर्षधि° A. ; °षषष्ठय° D. E. ; सुसंधिषष्ठ° C.

सुषामादीनां शाखत् ष इत्यनेन[१] सुषामादीनां सकारस्य षत्वं भवति ॥*॥ शोभनं साम प्रियवचनं यस्याः सा सुषाम्णी। यथा भट्टिकाव्ये[२]। सुषाम्णीं सर्वतेजःसु तन्वी ज्योतिष्मतीं शुभाम्।
निष्टपन्तीमिवात्मानं ज्योतिःसात्कुर्वतीं वनम् ॥
शोभन साम। सुषाम ॥ शोभन सामास्येति वा। सुषामा। ब्राह्मणः सौम्यो वा ॥*॥ दुष्टं साम। दुःषाम ॥ दुष्ट सामास्येति वा। दुःषामा ॥*॥ नितरां सेधः। निषेधः ॥*॥ दुष्ठु निन्दितम्[३]। सुञ्सूसासुस्तुभस्थासेनसेधतिसिचसञ्जस्वञ्जामित्यनेनैव[४] दुष्ठुशब्दस्य[३] षत्वे सिद्ध इह पाठः षत्वस्यानित्यत्वज्ञापनार्थः। तेन सुस्थितम्। दुःस्थितमिति सिद्धम्। यदा तु दुःशब्दो[५] निन्दायामनुपसर्गस्तदा विधानार्थम् ॥*॥ दुष्टः सधिः। दुःषंधिः ॥ दुष्टः संधिरस्येति वा। दुःषंधिः ॥*॥ निन्दितः सेधः। दुष्टः सेधोऽस्येति वा। दुःषेधः ॥*॥ शोभनः सेधः। शोभनः सेधोऽस्येति वा। सुषेधः ॥*॥ सुष्ठु शोभनम् ॥*॥ सिञ्चतीति सेचिका। नावः सेचिका। नौषेचिका काचित्स्त्री ॥ वामनस्तु। नावं स्यति। नौषा। नौषिकेत्याह[६] ॥ अपरे तु नौषेचनमिति टनान्त पठन्ति[७] ॥*॥ षिच चरण इत्यस्य टनप्रत्यये। सेचनम्। दुन्दुभ्याः सेचन[८] दुन्दुभिषेचनम् ॥ षिवु तन्तुसंताने। केट षेट[९] इत्यस्य वा टनप्रत्यये। सेवनम्।

---

१ A C om from सुषामादीनां

२ Bhatt 9,85 (सुषाम्णी °र्म्णीं MSS)

३ दुष्टं दुष्ट° A

४ °सेर्चतिसिच° ष्वंजामि° B, सुञुसृसासुचस्थासेनसध° A, सुञ्सूसासुतस्था° F, °सास्तुभस्था° सजष्वंजाष्वंजामि° C, MSS om स्तु, cf P viii 3,65

५ यथा तु शब्दो A.

६ नौसा नौसेव (om B C) नौषिके° A B C, नौसोषोव नौषिके° D, नौसा। नौषिकेत्याह B C — ? Some confusion, Kâś V viii 3,98 has only नौषेचनं (thus MS *a*, with Bö, Yajñ, नौषेवनं' ed), नावः सेचनं नौषेचनम्। वर्धमानस्तु नौषेचिका पपाठ। अन्ये पुनर्नाव स्यतीति नौषिका चेपणीदंड इत्याहुः। Yajñesv

७ नौषचनमिति° A, नौषेचनेति° F, टन प्रसेचनं। C

८ दुदुभ्या सेचनं F, om B C

९ Cf Pan Dhp 14, 30-9

सप्तम्या इत्यनेन सप्तम्या अलुक् ॥*॥ प्रतिस्नान्यस्यामिति प्रतिष्णिका। द्रोणी[1] ॥*॥ गौर्याः सक्थीव सक्थ्यस्येति गौरिषक्थः[2]। ड्याप्रत्ये च ह्रस्वस्य[3] बहुलमित्यनेन ह्रस्वत्वे। कस्यचिदिदं नाम ॥

आकृतिगणोऽयम्। तेन जलाषाहम्[4]। भीरुष्ठानम्। अग्निष्टुत्। इत्यादयोऽपि भवन्ति ॥ १५९ ॥ इति सुषामादिः ॥

गिरेर्नदी नखो नद्धो नितम्बो वक्रतो नदी।
नितम्बस्तूर्यमाणस्तु माषोनार्गयणावपि[5] ॥ १६० ॥

गिरिनद्यादीनामित्यनेन गिरिनद्यादीनामुत्तरपदनकारस्य णत्वं[6] वा भवति ॥*॥ गिरेर्नदी। गिरिनदी। गिरिणदी ॥*॥ एवं गिरिणखः। गिरिनखः ॥*॥ गिरिणा गिरौ वा नद्धः। गिरिणद्धः। गिरिनद्धः ॥*॥ गिरिनितम्बः। गिरिणितम्बः ॥*॥ वक्रनदी। वक्रणदी ॥*॥ वक्रो नितम्बो यस्याः। वक्रनितम्बा। वक्रणितम्बा[7] ॥*॥ तूर्यस्य मानमिव मानमस्य। तूर्यमाणः। तूर्यमानः ॥*॥ माषेणोनः। माषोणः। माषोनः ॥*॥ ऋचामयनम्। ऋगयनम्। ऋगयनस्य[8] वोद्धाऽध्येता वा। वेत्त्यधीत इत्यनेनाणि। अथवा। ऋगयनस्य व्याख्यानं तत्र भवो वा। ऋगयनेभ्योऽणित्यणि[9]। आर्गयणम्। आर्गयनम् ॥*॥ गिरिनद्यादयः प्रयोगतोऽनुसर्तव्याः ॥ १६० ॥ इति गिरिनद्यादिः ॥

---

१ द्रोणा D

२ गौरपक्थ B C F [कस्यचिम्मुने संज्ञैषा Yajñ]

३ ? Cf the same sûtra p 61,1 5, ड्यादिह्रस्वस्य C, ड्याद्देव ह्र° D, ड्याट्क च ह्र° F, ड्याद्भव ह्र° A, cf P vi 3,63-4

४ ? Thus the other works, जालाषाह D, जालाषोह° B, जलोषाह° F, जालाहं C — जलानि सहते इति जलाषाहम् Yajñesv

५ A om text and comment.

६ णोत्व B F and orig D

७ Bö, Kâs V read चक्रनदी। चक्रनितम्बा, Yajñ om this *gaṇa*

८ ऋगयणं ऋगयनस्य B, ऋगयनं। ऋगयणस्य D

९ Cf. P iv 3, 73

क्षुभ्नातृप्नू नन्दननर्तननृनमननिवासनृत्तानि[1] ।
नन्दी निवेशनगरे गहनायी सर्वनामनटौ[2] ॥ १६१ ॥

क्षुभ्नादीनां शब्दानां णकारत्वं न क्षुभ्नादिष्विति णत्वं[3] न भवति ॥ ० ॥ क्षुभ्नाति । क्षुभ्नीत । क्षुभ्नन्ति । क्षुभ्नन् । क्षुभ्नान । क्षुभ्नता । यथा भट्टिकाव्ये ।

रोषभीममुखेनैव क्षुभ्नतोक्तं सखगम[4] ।
मोघे चानुनयं वाक्यं रावणं चार्थविद्रुवे ॥

क्षुभ्नता कलुषीभवतेत्यर्थः ॥ ० ॥ तृप्नोति । तृप्नुत । तृप्नुवन्ति ॥ तृप्नु । इत्यत एव गणपाठात् ॥ ० ॥ हरेर्नन्दनम् । हरिनन्दनम् । इन्द्रो यानम् ॥ ० ॥ परितो नर्तनम् । परिनर्तनम् । नृत्तमयोग[5] ॥ ० ॥ नृनमनम् । नृनमनम् । नृनमनो नाम कश्चित्तस्य नार्नमनि पुत्रः । स्वरूपपदमेतत् ॥ केचित्तु नृनमयति । नृनमं[6] इत्युदाहरन्ति ॥ ० ॥ नराणां निवास । नरनिवासो देश ॥ ० ॥ परितो नृत्तम् । परिनृत्तम्[7] ॥ ० ॥ कुमारानन्दयतीत्येवंशील । कुमारनन्दी ॥ ० ॥ नराणां निवेश । नरनिवेश । तूणीर[8] ॥ ० ॥ हरिनगरम् ॥ ० ॥ परितो नहनम् । परिनहनम् ॥ ० ॥ यवराणामपि । यवराग्नि ॥ हरिमनस्कार्याणि । वर्मीणि । विश्रुत् ॥ ० ॥ सर्वेषां नाम । सर्वनाम ॥ ० ॥ शूर्पणखानो नटः । शूर्पनट[9] ॥ परिनद्धो नाम कश्चिदिम ॥ १६१ ॥

क्षेयो निवेषनानूपो नदनो नरवाहन ।
स्वर्भानुर्नेदनश्चो च क्षुभ्नादौ स्यान्नृतेयेष्टि[10] ॥ १६२ ॥

---

१ नन्दननर्तक॰ D ; ॰नृत्तानि F
२ ॰नादौ C ; A om. text and comm.
३ क्षुभ्रादिष्वपि B. C. F ; णीत्वं B.
४ Bh. ix 109 ; क्षुभितैव A. B. C. D
५ D corr. tasc॰नर्तने नृत्तमयोग D.
६ नृनमम C. and corr. D
७ परितो नृत्तं परिनृत्तं F
८ तूणीर B. F ; तूर्ण D.
९ Cf p. 201 l. 1
१० A. om. text and comment.

शराणां निवेशनम् । शरनिवेशनम् । शरधिः ॥ * ॥ अनूपान्निष्क्रान्तः । निरनूपः ॥ दर्भानूपं नाम स्थानम् ॥ * ॥ भेर्या नदनमिव नदनं शब्दनमस्य । भेरीनदनो नाम कश्चित् ॥ * ॥ नरो वाहनमस्य । नरवाहनः । वाहणं[1] वाह्यादित्यनेन नरस्यावाह्यत्वाणत्वं[2] नास्ति ॥ * ॥ प्राक्स्थाद्यन्तेऽपूनामित्यनेन[3] णप्राप्तिः । स्वर्भानुः । सैंहिकेयः । एत्वनन्यादेरित्यनेन णत्वप्राप्तिः[4] ॥ केचिद् अन्तःपूर्वपदात्संज्ञायामित्यनेन णत्वमिच्छन्ति[5] ॥ * ॥ चारवो नदा यस्मिन्ग्रामे नगरे वा स चारुनदः ॥ * ॥ सुराणां नदी । सुरनदी ॥ * ॥ नृतेर्नकारस्य यङि परे णत्वं[6] न भवति । नरीनृत्यते । नर्नर्त्ति । नरिनर्त्ति । नरीनर्त्ति । नर्नृतीति ॥ यङीति किम् । हरिरिव नृत्यतीति । हरिणर्ती नाम कश्चित् ॥

अग्न्यादिक्षुभ्नाद्योरेकत्व प्रतिपन्नाः सामान्येन विशेषाभावात् ॥ आकृतिगणोऽयम् । तेन चतुर्हायनं कर्मेत्यादयो द्रष्टव्याः ॥ १६२ ॥ इति क्षुभ्नादिः ॥

इति

श्रीगोविन्दसूरिशिष्यपाण्डतश्रीवर्धमानविरचितस्वीयगणरत्नमहोदधिग्रन्थवृत्तौ समासप्रक्रियानिर्णयो नाम

द्वितीयोऽध्यायः समाप्तः[7] ॥

---

१ वाहनं F , P viii 4, 8 v 2

२ °णीत्वं B , नरस्यवाह्य° C

३ ? प्राक् प्वाद्यंते पूनामि° B , प्राक् घाद्यंते यूनामि° C , प्रावस्थाद्यंतिप्ना- मि° D , प्राप्ताद्यंते यूनामि° F , °नुप्राप्तिः B C F , नप्राप्ति (orig नु°) D

४ णीत्वप्राप्तिः B

५ णीत्व° B , cf P viii. 4, 3

६ णीत्वं B

७ गोविंदाचार्यशिष्य° D E. , समासतत्प्रक्रियागणनिर्णयो° B C F

अथ तृतीयोऽध्यायः ॥

ब्रह्मा कलापितैतलिशिलालिलाङ्गलिशिखण्डिजाजलिनः[1]।
सूकरसद्मा कुथुमी सुपर्वणा पीठसर्पी च[2] ॥ १६३ ॥

ब्रह्मादीनामित्यनेन ब्रह्मन्नित्येवमादीनामेषामपि परेऽण्यन्त्यस्वरादेर्लुग्भवति ॥ ० ॥ ब्रह्मणोऽपत्यम् । ब्राह्मो नारदः ॥ ब्रह्मण इदम् । ब्राह्ममस्त्रम् । ब्राह्मो मन्त्रः । ब्राह्म्योषधिः ॥ शाकटायनस्तु जातावभिधेयायामपत्य एवाण्यन्त्यस्वरादेर्लुगमिच्छन्ति नापत्ये[3]। तेन ब्रह्मणोऽपत्यम् । ब्राह्मणः ॥ ० ॥ कलापिना प्रोक्तमधीयानाः । कालापाः ॥ ० ॥ तैतली । आचार्यः । तत्प्रोक्तो ग्रन्थोऽपि तच्छब्देनोच्यते । तमधीयते तैतलाः[4] ॥ ॥ एवं लाङ्गलाः ॥ ० ॥ जाजलाः ॥ ० ॥ शिखण्डिन इमे । शैखण्डाः ॥ ० ॥ एवं शैलालाः[5] ॥ ० ॥ सौकरसद्माः[6] ॥ ॥ कौथुमाः[7] ॥ ॥ सौपर्वाः ॥ ० ॥ पैठसर्पाः ॥

चशब्दस्याकृतिगणार्थत्वात् तेन सामनाः । दाम्नम् । चार्मम् । इत्यादयो भवन्ति ॥ १६३ ॥ इति ब्रह्मादिः ॥

अनुगतिकपरस्त्रीसर्वलोकातिहत्या
कुरुकतगतकुम्भागारवेशत्स्यहत्या ।
अनुहृदनुहोडायस्यहेतीहलोका
अभिगमपरलोकौ सर्वभूमिप्रयोगौ[8] ॥ १६४ ॥

---

1 A. om. śloka and comment.

2 सुकरसद्मा F ; सूकरसद्मो D.; कुथुमी D F ; सूकरसद्माकुथुमा C ; सूकरसद्माकुथुमी F

3 जातावभिधेयायामपत्य एवाण्यन्त्यादेर्लुगमिच्छन्ति D P vi 4, 171

4 Thus MSS. तैतलिन् । तैतिल P vi 4, 144 V. and Kāś. V ; cf. p. 2?? (तितलिनस्तु तैतिलकस्य तैतिलायनः).

5 शैलाला B., शैलाला C.

6 सौकरसद्मा C.; सौकरसद्मा F ; सौकरसद्मा D

7 कौथुमा D.

8 A. om. śloka and comment.

परस्य चानुशतिकादीनामित्यनेनानुशतिकादीनामेव शब्दानां परपदस्य पूर्वपदस्याचामादेरचः स्थानेऽणादौ ञ्णिति पर आरैज् भवति ॥ * ॥ शतेन क्रीतः । शतिकः । अनुगतः शतिकेन । अनुशतिकः । तस्येदम् । आनुशातिकम् ॥ * ॥ परस्य स्त्री । परस्त्री । तस्या अपत्यम् । पारस्त्रैणेयः ॥ * ॥ सर्वलोके विदितः । सार्वलौकिकः[१] । यथा भट्टिकाव्ये । भवन्त कार्तवीर्यो यो होनसधिमचीकरत् ।

जिगाय तस्य हन्तारं स रामः सार्वलौकिकम्[२] ॥ * ॥

असिहत्याया[३] भवम् । आसिहात्यम् ॥ * ॥ कुरुकतस्यापत्यम् । कौरुकात्यः ॥ * ॥ शतकुम्भो नाम पर्वतः । तत्र भवं शातकौम्भं सुवर्णम् ॥ केचिच्चादृष्टव्याकरणा लक्ष्यमेव केवलमनुसरन्तः शातकुम्भमित्याहुः । अत एव भोजः शतकुम्भस्य विकारः शातकौम्भमित्याह[४] ॥ * ॥ अगारवेणूनामिदम् । आगारवैणवम् ॥ वामनस्त्वङ्गारवेणोरपत्यम् आङ्गारवैणवमित्याह[५] ॥ अधेनुशब्दमपि केचित्पठन्ति[६] ॥ * ॥ अस्यहत्याशब्दोऽस्मिन्नस्तीति विमुक्तादित्वादण् । आस्यहात्यः ॥ भोजस्त्वस्यहत्यशब्दं[७] पठति । असिहत्य इत्यन्ये[८] ॥ * ॥ अनुरहतो[९]ऽपत्यम् ।

---

१ °विदित °लौकिकं D

२ Bhattik १ 33

३ Thus also Yajñ Kâs, V MS $\beta$, असिहत्य Bo, Kâs V ed, MS $a$, cf note ८

४ श्रीभोज °शातकुभमित्याह D, शातकुभस्य° शातकौभमित्याह B C F

५ Thus Kâs V ed, MS $\beta$, Bo & (अङ्गारवेणुर्वंशजातिविशेषः । आङ्गारवैणवं पात्रविशेष) Yajñesv, अगार° Kâs V $a$, °अगरवेणोर° आगरवैणव° D, अगारधेनोर° आगारधेनव° (°धेनव C) B C F

६ ? Thus B C F, अधेणु° D — केचित्तु अगारधेनुशब्दमत्राधीयाना अगारधेनोरपत्यमागारधेनवो वत्स इत्याहुः । Yajñ, probably right He does not notice our author's reading

७ श्रीभोज°D, भोजस्त्वस्यहशब्द F Yajñ has both, Bö, Kâs V ed $a$ °हत्य, $\beta$ हत्या

८ अभिहत्य° F, om D, cf n ३

९ Thus MSS here and *bâhvâdi* sl 204 The other works read अनुहरत् Cf आनुराहति *taulvalyâdi*, sl 173

दिलादण् ॥ * ॥ सूत्रप्रधानो नडः । सूत्रनडः । तस्यापत्यं सौत्रनाडिः ॥ कश्चित् सूत्रनट[1] इत्याह ॥ * ॥ चतस्र एव विद्याः । चातुर्वैद्यम् ॥ * ॥ कुरवश्च पञ्चालाश्च तेषु भवः । कौरुपाञ्चालः । बहुत्व इत्यनेनाकञ् न भवति तत्र देशव्यक्तेर्विवक्षितत्वात् । अत्र तु देशसमुदायः ॥ * ॥ देवमधिकृत्य भवम् । आधिदैविकं दुःखम् ॥ १६५ ॥

बध्योगोदकशुद्धौ[2] पुष्करसत्संक्रमाधिभूताः स्युः ।
प्रतिभूरजातशत्रुः परिमण्डलराजपुरुषौ च ॥ १६६ ॥

बध्योगस्य[3] ऋषेरपत्यं विदादित्वादणि । बाध्योगः ॥ * ॥ उदकशुद्धस्यापत्यम् । औदकशौद्धिः ॥ * ॥ पुष्करसदोऽपत्यम् । पौष्करसादिः ॥ * ॥ सक्रममर्हन्ति । सांक्रामिकाः ।

तिलाश्चम्पकसंपर्कात्प्राप्नुवन्त्यधिवासताम् ।
रसो न भक्ष्यस्तद्गन्धः सर्वे सांक्रामिका गुणाः[4] ॥

यथा वाऽनर्घ्यराघवे ।[5] कश्चित्सांक्रामिकोऽपि विशेषो नैसर्गिकमतिशेते ॥ * ॥ अधिभूते भवम् । आधिभौतिकं सुखम् ॥ * ॥ प्रतिभुवो भावः कर्म वा । प्रातिभाव्यम् ॥ * ॥ अजातशत्रोरियम् । आजातशात्रवी । यथा ।

उपेयिवांसि कर्तारः पुरमाजातशात्रवीम्[6] ॥ * ॥

परिमण्डलस्य भावः कर्म वा । पारिमाण्डल्यम् ॥ * ॥ राजपुरुषस्य भावः कर्म वा । राजपौरुष्यम् ॥ १६६ ॥

---

१ Thus D F, सूत्रनेट B C, cf p 196, l. 18

२ शुद्धौ E, A om sl. & comment.

३ वं शंभुं गच्छत्यभियाति वग. कंदर्पः । वध्यो नियाह्य उगो येन स बध्योगो नामर्षि. Yājñ

४ Kâm Nît 5, 7, Bö Spr 2562 (°चम्पकसंश्लेषात्°), लसो गुभक्ष° D

५ D omit from यथा — Anargh, Calc § 1782, p 36 (क्वचित्सां° ed.)

६ Śiś 2, 114 (पुरीमाजात° ed.)

सौवग्रामिकः ॥ * ॥ श्वनो विकारः । शौवनं मांसम् । शौवः[1] सकोचः ॥ * ॥ स्वादुम्टद इदम्[2] । सौवादुम्टदम् । कच्छादिदर्शनादण् ॥ स्वादी चासौ म्टच्च सास्मिन्देशेऽस्तीति । सौग्दम्टदो देशः ॥ पाणिन्यादयस्तु सौवादुम्टदवमित्याहुः ॥ * ॥ द्वारपालस्यापत्यम् । दौवारपालिः ॥ केचिद् द्वारपालशब्द रेवत्यादिष्वधीयाना दौवारपालिक[3] इत्युदाहरन्ति ॥ * ॥ श्वादंष्ट्रायां भवः । शौवादंष्ट्रो मणिः । श्वनो दन्तादाविति[4] दीर्घत्वम् ॥ * ॥ स्वाध्यायेन चरति । सौवाध्यायिकः ॥ * ॥ स्वरमधिकृत्य कृतो ग्रन्थः । सौवरः ॥ * ॥ द्वारपालादीनामुपादान सुखार्थम् । यतो द्वारादेः केवलस्य तदादेश्च परिग्रहः[5] ॥ आकृतिगणोऽयम् । तेन स्फ्यो यज्ञायुध तेन कृत । स्फैयकृतो नामर्षिः । स्फ्यकृदित्यपि संगृहीतः[6] ॥ १६७ ॥ इति द्वारादिः ॥

**स्वागतस्वध्वरव्यङ्गा व्यवहारो व्यडस्तथा[7] ।**
**व्यायामस्वपतिस्वङ्गस्वजनाश्चाच कीर्तिताः ॥ १६८ ॥**

पदान्तय्वोः स्वागतादेश्चैच[8] इत्यनेन स्वागतादिशब्दाना टैजागमो न भवति[9] ॥ * ॥ स्वागतमित्याह । स्वागतिक. ॥ * ॥ शोभनो

---

१ शुन इद शौवनम्० । शुनो विकारो मांस सौवम् Kâs V , शुन इदं शौवन पुच्छ शौवन सकोच । Yajñ

२ स्वादुमुदु इद C , not in *Kachchhâdi* sl 327-8 —The other works have स्वादुमृदु, Yajñesv also mentions Vardhamâna's reading

३ दौवारपालक B

४ दतावादाविति B C F , cf Kâs V vi 3, 137

५ तदादेशस्य C , परिग्रहात् D

६ स्फौ० स्फाकृतो० स्फाकृद्० B C , स्फ्यकृतो नाम० F , D om from आकृतिगणो —Bo has both readings, Yajñ , Kas V only स्फ्यकृत

७ स्वागत स्वध्वरो व्यंगव्यवहारो [रो C] B C F , A om text and comm

८ स्वागतोदेय्यष्टैच C , स्वागता देर्व्यष्टैच् F , स्वागतादेर्घष्टौजित्य० D

९ जागमो D , शब्दाना मैजागाता दिशब्दानां मैजागमो० C

ऽध्वर मध्वर । सध्वरेण चरति । साध्वरिक ॥ ० ॥ यत्नान्यङ्गानि[1] यत्यामी यज्ञ । यज्ञस्यापत्य याज्ञि ॥ ० ॥ यवहारेण चरति । या वहारिक ॥ ० ॥ यजो नामर्षि । तस्यापत्यं याजि ॥ ० ॥ यायाम प्रयोजनमस्य । यायामिक ॥ ० ॥ स्वपतौ साधु । स्वापतेय ॥ ० ॥ सज्ञस्यापत्य साज्ञि ॥ ० ॥ सजनाप्रयोजनमस्य[2] । साजनिक ॥ ० ॥ येषां टैसागमो न दृश्यते तेऽत्र द्रष्टव्या[3] ॥ १९८ ॥ इति स्वागतादि ॥

पैलौदन्वी राहवी रावणिश्च
दैवस्थानी राणिराहक्षिती च[4] ।
औदभृज्जि[5] सात्यकिश्चौदमेघि
सात्यकामि पैङ्गलोदायनिश्च[6] ॥ १६० ॥

पैलादिभ्यस्तौल्वल्यादिरित्यनेन[7] पैलादेर्विहितस्यापत्यप्रत्ययस्य लुग्भवति[8] ॥ ० ॥ पीलाया अपत्य पैल । पीलासप्तूकादेरयम्[9] । पैलस्यापत्यमिति युवोऽत्र इति फिञ् तस्य लुक[10] । पैल पिता । पैल पुत्र ॥ ० ॥ उदन्वतो[11]ऽपत्यम् । बाह्वादिभ्यश्चेतीञ् । औदन्वि पिता । औदन्वि पुत्र[12] ॥ ० ॥ राहोरपत्यम् । राहवि पिता । राहवि पुत्र ॥ ० ॥ रवणस्यापत्यम् । रावणि पिता । रावणि पुत्र ॥ ० ॥

---

१ त्रिमतान्यङ्गानि D
२ साजना प्रयोजन F
३ येषां टैसागमो° F ; D om. from स्वपतौ साधु
४ पैलौदन्वी° B. C. ; राहवी D.
५ Note the metrical irregularity in the second syllable ; ? औदभृज्जि
६ पैङ्गलोदायनिश्च B. C. ; A. om. text and comment.
७ पैलादिभ्य F ; तौल्वल्यादेरि° D.
८ °पत्यप्रत्ययस्य लुग्भवति D
९ पीलासाल्वा° B. C. D ; cf. P iv 1 118-9.
१० फिञ्° B. C. ; लुक् D ; cf. P iv 1 156.
११ उदन्वो D. ; उदन्वो C. ; Aufrecht p. 204.
१२ C. twice औदन्वि° ; औदन्वि D.

देवस्थानस्यापत्यम्। दैवस्थानिः पिता। दैवस्थानिः पुत्रः ॥ * ॥ रण-स्यापत्यम्। राणिः पिता। राणिः पुत्रः ॥ * ॥ रहेण चितो[1] हिंसितो रहचितः। तस्यापत्यम्। राहचितिः पिता। राहचितिः पुत्रः ॥ * ॥ उदके मज्जतीति मूलविभुजादित्वात्के[2]। उदमज्जः। तस्यापत्यम् औदमज्जिः पिता। औदमज्जिः पुत्रः ॥ * ॥ सत्य एव सत्यकः। तस्यापत्यं सात्यकिः पिता। सात्यकिः पुत्रः ॥ * ॥ उदमेघस्यापत्यम्। औदमेघिः पिता। औदमेघिः पुत्रः ॥ * ॥ सत्ये कामोऽस्य। सत्यंकामः। अत एव निपातनान्मुक्। सत्यमिति निपातो वा शपथपर्यायः[3]। तस्यापत्यं सात्यंकामिः पिता। सात्यंकामिः पुत्रः ॥ * ॥ पिङ्गलोदायनस्यापत्य[4] पैङ्गलोदायनिः पिता। पैङ्गलोदायनिः पुत्रः[5] ॥ शाकटायनस्तु पैङ्गलोदयनिरित्याह[6] ॥ १६९ ॥

**शालङ्क्यौदकशुद्धी भौलिङ्ग्यौदव्रजी तथौदन्यिः[7]।**
**औद्राहमानियुक्तौदमज्जिरपि चौञ्जिहानिः स्यात्[8] ॥१७०॥**

शलङ्कोरपत्यम्[9]। शालङ्किः पिता। शालङ्किः पुत्रः ॥ * ॥ उदकशुद्धस्यापत्यम्। औदकशुद्धिः पिता। औदकशुद्धिः पुत्रः ॥ औदशुद्धिरिति भोज.[10] ॥ * ॥ भूलिङ्गस्यापत्यम्[11]। भौलिङ्गिः पिता।

---

१ रहचितो० B C, रहे चितो० F

२ Not in that *gaṇa*, sl 460

३ सयथपर्यायः D and om to सात्यकामि. पुत्रः

४ पिंगलोदायिनस्या० B, पिंगलोदायि तस्याऽपत्यं F, पिंगलोदायन. तस्यापत्य० D, om C

५ पेगलोदायिनि' twice B

६ ॰पेगलोदायनि० C, D corr पैंगलोदयोगिरि०, Bö reads पैङ्गलोदायनि

७ तायोदन्यिः C, तसौदन्यि. D, सथौदन्यिः F

८ युक्तौ औद० B, युतेदमज्जि० corr D, अपि चोञ्जिहानि'० E, A om text and comment

९ शलंकेरपत्यं C, शलकोर० D, शालंकोर० F

१० Thus also Bö, Yajñ, Kās V MSS (औदशुधि ed), चौदसुचिरिति श्रीभोज. D [cf औदवार्शोधि sl 166]

११ भुलिंगस्य० MSS and Yajñ see sl 50 comm

औशिज्ञि पुत्र ॥ ॥ उदमजस्यापत्यम् । औदमजि पिता । औदमजि पुत्र ॥ ० ॥ उदन्यस्यापत्यम् । औदन्यि पिता । औदन्यि पुत्र । तिकादिषु पठ्यमानस्याप्यस्मात्[1] एव पाठात् फिञ्[2] विधीयते तेन रूपद्वयम् । औदन्यि । औदन्यायनि ॥ ० ॥ उद्गाहमानस्यापत्यम् । औद्गाहमानि पिता । औद्गाहमानि पुत्र ॥ ० ॥ उदमज्जस्यापत्यम् । औदमज्जि पिता । औदमज्जि पुत्र ॥ ॥ उज्जिहानस्यापत्यम्[3] । औज्जिहानि पिता । औज्जिहानि पुत्र । कश्चिद् औज्जिहानिरिति[4] मन्यते ॥ ० ॥ एभ्य इमन्तेभ्य फक्[5] लुक् ॥ १७० ॥ इति पैलादि ।

तौल्वलिवैरकिपारणिपौष्किं[6]
वैल्वकिमाध्यकिरावणिवैह्नि[7] ।
आसुरिनैमिषिनैवकियुक्तं[8]
दैवतियाकेलिवैहतिभिश्च[9] ॥ १७१ ॥

तौल्वल्यादे पर्युदासादपत्यस्यापत्यादिप्रत्ययेन मात्रा लुग्न भवति ॥ ० ॥ तुल्वलो नामर्षिः । तस्यापत्यं तौल्वलिः । तदपत्यं तौल्वलायनः । तैल्वलिरित्यन्ये[10] ॥ ० ॥ वीरकस्यापत्यम् । वैरकिः पिता । वैरकायणः पुत्र[11] । वैरकिरिति शाकटायनः ॥ ० ॥ परणस्यापत्यम् ।

---

1 See p. 220; तिकादिषु पच्यमानस्यापत्यं C. and omits thence to उज्जिहानस्यापत्यं

2 इफिपि B.; इफपि F; इफपि D.

3 See note 1

4 ? औज्जिहानिरिति B. C.

5 पाप B.; °भ्य आ पापि C.; पम D.; °भ्य एष लुक् । F; cf. P II. 4. 60; Ir I. 161.

6 °वैरकि C.; °पारकिपौष्कि F

7 मौपविरावणिवैहि C.; वैहि F

8 नैवकियुक्तं B. C. F

9 वास्तकि° B.; वैहतिभिश्च D.; A. om. text and comment.

10 तिल्वलिरित्य° F; om. D.—? तौल्वलिरित्यन्य° ।

11 विरकायन° वैरकिः °विरकायण —The other work have वैरकि

धार्ष्णिः पिता। धारणायनः[1] पुत्रः ॥ * ॥ पुष्यो नाम कश्चित् तस्यापत्यम्। पौष्यिः पिता। पौष्यायणः[2] पुत्रः ॥ * ॥ विल्वकस्यापत्यम्। वैल्वकिः पिता। वैल्वकायनः पुत्रः ॥ * ॥ बन्धकस्यापत्यम्। बान्धकिः पिता। बान्धकायनः पुत्रः ॥ * ॥ रवणस्यापत्यम्। रावणिः पिता। रावणायनः पुत्रः। शाकटायनस्तु रावणिरित्याह ॥ * ॥ विङ्कस्यापत्यम्। वैङ्किः पिता। वैङ्कायनः पुत्रः[3] ॥ * ॥ न सुरोऽसुरः। तस्यापत्यम्। आसुरिः पिता। आसुरायणः पुत्रः ॥ * ॥ निमिषस्यापत्यम्। नैमिषिः पिता। नैमिषायणः पुत्रः ॥ नैमिशिरिति शाकटायनः ॥ * ॥ निवकस्यापत्यम्। नैवकिः पिता। नैवकायनः[4] पुत्रः ॥ * ॥ देवतस्यापत्यम्। दैवतिः पिता। दैवतायनः पुत्रः ॥ दैवोतिरिति[5] शाकटायनः ॥ * ॥ वृकलाया अपत्यम्। वार्कलिः पिता। वार्कलायनः पुत्रः[6] ॥

दोधकं छन्दः। भौ तु भगौ गिति दोधकमेतत् ॥ १७१ ॥

पौष्करसादिवैकर्ण्याहिंसिकारेणुपालयः[7]।
आसिबन्धकिवैशीतिदैवयज्ञ्यासिनासयः[8] ॥ १७२ ॥

पुष्करसदोऽपत्यम्। पौष्करसादिः पिता। पौष्करसादायनः पुत्रः ॥ * ॥ विभूषितौ कर्णौ यस्य। विकर्णः। तस्यापत्यम्। वैकर्णिः पिता। वैकर्णायनः पुत्रः ॥ * ॥ न विद्यते हिंसाऽस्य। अहिंसः। तस्या-

---

१ धारणायनि B C

२ पौष्पायन MSS

३ °विकस्यापत्य वैकि° वैकायन.° F, Kas V ii 4, 61 वैकि ed, वैंकि MS a, Yajñ, वैङ्कि (var l वैकि) Bö

४ निचकस्य° नैचकि° नैच° B C F, नैवकि (var l नैवति) Bö, नैवकि Yajñ, wanting in Kâs V

५ Thus MSS? दैवति. (पुत्र) इति शाकटायन.।

६ None of the MSS explain वैहति Yajñ has विहतस्य वैहतिर्वैहतायन।

७ पुष्करसादि° B C F

८ वैसीति° B C, वैकर्णा° दैवयज्ञासिनासय D, A omits text and comment

अनुरहतोऽपत्यम् । आनुराहतिः[1] पिता । आनुराहतायनः पुत्रः ॥ * ॥ चफट्टकशब्दोऽनुकरणम् । तदुच्चारणात्पुरुषोऽपि चफट्टकः । तस्यापत्यम् । चाफट्टकिः पिता । चाफट्टकायनः पुत्रः[2] ॥ कुर्वादावस्य चत्रियस्य ग्रहणम् । इह तु ब्राह्मणवाचिनस्तेनेञ् सिद्धः[3] ॥ * ॥ निस्रयेन मिश्रो निमिश्रः । तस्यापत्यम् । नैमिश्रिः पिता । नैमिश्रायणः पुत्रः ॥ * ॥ पृच्छत्याहन्ति च । प्राडाहतः[4] । तस्यापत्यम् । प्राडाहतिः पिता । प्राडाहतायनः पुत्रः ॥ प्राटाहतिरित्यपि वामनः[5] ॥ * ॥ देवमतस्यापत्यम् । दैवमतिः पिता । दैवमतायनः पुत्रः ॥ १७३ ॥ इति तौल्वल्यादिः ॥

प्रज्ञश्रोत्रपिशाचचोरमरुतो रक्षश्चरिनोशिजः
प्रत्यक्षासुरशत्रुसंतपनसत्साधारणानुष्टुभः ।
चण्डालाशनिगोरजेतृजगतीसत्वद्वृ्ञितादेवताश्[6]
चक्षुर्व्याकृतवन्धुयोधमधवो विद्यामनोजुह्वतः ॥ १७४ ॥

प्रज्ञादेरणित्यनेन प्रज्ञादेः शब्दगणादण् वा भवति स्वार्थे[7] ॥ * ॥ प्रज्ञ एव प्राज्ञः । प्राज्ञी स्त्री ॥ प्रज्ञाज्योत्स्नेत्यादिना णप्रत्यये[8] सिद्धम् ।

---

१ Kâs. V ii 4,61 आनुहारति (!) ed , °राहति MSS , Bö , Yajñ आनुराहति (Bö *var l* आनुहारति), and besides आनुरोहति

२ Thus also Bö , Yajñ (? श्वाफल्कि Kâs V ed ), वफडक° वफडक° वाफडकि ° वाफडकायन.° C

३ B C om from कुर्वादावस्य

४ ? Thus D , प्राडाहति B C F

५ ? प्राढाहति° B , प्राडाहति° C , om D —Bö , Yajñ have only प्राडाहति, Kâş V ed प्रावाहणि (प्राणाहति MS *a* and *var l* ed , om MS $\beta$ , Prof Kielhorn's MS , perhaps right, प्राडाहनि)

६ शश्वद् for सत्वद् F , A om text and comment

७ प्रज्ञादिशब्दगणात्° D

८ प्रज्ञायोत्स्ने° B C , °ज्योत्स्नेत्यादिनाणप्रत्यये D , ऽणप्रत्यये F , cf P ६ 2, 101 प्रज्ञाश्रद्धार्चाभ्यो णः ।

अशनिरेव । आशनः । वज्रम् ॥ * ॥ गोर एव गौरः । सितः पीतो ऽरुणश्च वर्णः ॥ * ॥ जेत्रेव[1] । जैत्र धनु. । जैत्री शरश्रेणिः[1] ॥ * ॥ जगत्येव जागतम् ॥ * ॥ सत्वानेव सात्वतः[2] । चन्द्रस्तु सत्वन्निति नान्त छात तलोपं[3] पठन् सत्वानेव सात्वन इत्याह ॥ * ॥ द्वयोर्भावो द्विता । द्वितैव द्वैतम् । यथा ।

निदानं निर्द्वैत प्रियजनसदृच्च व्यवसितिः[4] ॥

देवतैव दैवतम् ॥ * ॥ चक्षुरेव चाक्षुषम् ॥ * ॥ व्याहृतमेव वैयाहृतम् ॥ * ॥ बन्धुरेव बान्धवः । स्त्रियामणन्तस्यासामर्थ्यान्न वृत्तिः[5] । शुद्धप्रकृतिस्तु वर्तत एव । यथा । बन्धुरियं ब्राह्मणी[6] । एवं सर्वत्र ॥ * ॥ योध एव यौधः ॥ * ॥ मधुरेव माधवः ॥ * ॥ विद्यैव वैद्यम्[7] । नपुंसकत्वमेव ॥ कश्चिद् विद्यासंबन्धात्पुरुषोऽपि विद्या । स एव वैद्य इत्याह ॥ * ॥ सन एव सानसम् ॥ * ॥ जुहृदेव जौहृत. ॥ १७४ ॥

निगमवणिजौ गन्धर्वश्वाग्रहायणषोडतौ
प्रकृतविदतौ क्रुङ् रक्षोघ्नो विघातचिकीर्षितौ[8] ।
ततवसुकराग्नीध्रं विश्वानरो वरिवस्कृतो[9]
ऽनुषुकविकृते विद्वानुष्णिक् चरश्च कुतूहलम्[10] ॥ १७५ ॥

नितरा गम्यन्ते पदार्था अनेनेति निगम' । निगम एव नैगमः । नय' ॥ * ॥ वणिगेव वाणिज' । वाणिजी स्त्री ।

---

१ जैतेव० शरश्रेणी F
२ शश्वदेव शाश्वत F
३ सत्विति तात० F , छत्वा तलोप C
४ ०जनसुहृक्कृव्यवसिति D , ०सदृग्व्य० F., ०सदृक्कव्यवसिति B C
५ ०अणन्तस्य सामर्थ्यान्न० D , न प्रवृत्ति F
६ वर्तमान एव यथा० D , ब्राह्मणी C D
७ विद्यं B
८ प्रकृतविदितौ C and a. m D , प्रकृतविदकुंच रचो० C
९ वरिवष्कृतो B C D F
१० नूषुकवि० C , वरस्व० F , A om text and comment

पङ्क्तो वैयाकृतैः सूक्तैर्जागतानुष्टुभौष्णिहैः[1]।
राक्षसासुरपैशाचवैकृतानां निवर्तकम्[2]॥

विद्वानेव वैदुषः ॥*॥ उष्णिगेव। औष्णिहम् ॥*॥ चर एव चारः[3]॥*॥ कुतूहलमेव कौतूहलम् ॥ १७५॥

नन्दामात्यडहालसंप्रतिव्रजाः कर्षापणत्रिष्टुभौ
गायत्रीरवणोपचेयककुदेकाग्र्याटरूषास्तथा[4]।
संनाय्याग्रयणौ विधेयकुतुकागारद्विदत्पङ्क्त्यः[5]
सत्वन्तुप्रतिभावियातसहसा वार्ता विदन्तोऽपि च॥१७६॥

नन्दति वृद्धिं यातीति नन्दा। नन्दैव नान्दी[6]॥*॥ अमात्य एव। आमात्यः ॥*॥ डहाल एव डाहालः ॥*॥ संप्रत्येव सांप्रतम् ॥*॥ व्रजतीति व्रजः। स एव व्राजः ॥*॥ कर्षापण एव कार्षापणः ॥*॥ त्रिष्टुबेव त्रैष्टुभम् ॥*॥ गायत्र्येव गायत्रम्। छन्दसां पूर्वम्[7]॥*॥ रवण एव रावणः ॥*॥ उपचेय एव। औपचेयः[8]॥*॥ ककुदमेव काकुदम्। शब्दशक्तिस्वाभाव्यात्स्वार्थिकाण्प्रत्ययान्तस्यापि काकुद-शब्दस्यार्थभेदो द्रष्टव्यः॥*॥ एकमग्र्यं पुरोगतं ध्येयमस्य[9]। एकाग्र्यः। स एव। ऐकाग्र्यः। अनन्यवृत्तिः ॥*॥ अटन् रूषतीति[10]। अटरूषः। स एव। आटरूषः सिंहास्यः। यथा।

---

१ प्रश्नो वैया० D, पङ्क्तो चैयाकृतैः रूक्तैः जा० C, यच वैयाकृतै.० भोष्णिहै F

२ निवर्तकः D—Yajñ makes this *kārikā* end thus ०वैकृतानि भवन्ति नो॥

३ मर एव वार. F

४ उपवेय MSS, ०अयरूयास्तथा E

५ ०द्विद. पक्तयः F, A om text and comment

६ नंद.। नद एस० B C F, नंदा एव० D, नांद. F

७ पूर्वे D

८ उपवेय एव औपवेयः C D

९ धेयमस्य B C

१० अटतो रूषतीति F

हरिराकुमारमखिलाभिधानवित्
स्वजनस्य वार्त्तमयमन्वयुङ्क्त सः[1] ॥ * ॥

विगता दन्ता अस्य । विदन्तः । विदन्त एव वैदन्तः । बालादिः ॥ १७६ ॥

वयश्चतुष्प्राश्यदशार्हयुक्तः
परिप्लवः पुष्पकसंयुतश्च ।
कृष्णः कुरङ्गेऽनिमिषे[2] विसारी
स्यादौषधं भेषज एव कामम्[3] ॥ १७७ ॥

वय एव वायसः । काकः । वयःशब्दः सामान्येन पक्षिवाच्यपि विशेषे वर्तते शब्दशक्तिस्वाभाव्यात् ॥ एवं वसुशब्दोऽपि द्रष्टव्यः ॥ * ॥ प्राश्नन्ति प्राश्नुवते वा तदिति प्राश्यम् । चतुर्भिः प्राश्यं चतुष्प्राश्यम्[4] । तदेव चातुष्प्राश्यम् ॥ * ॥ दश नामान्यर्हति । दशार्हः । स एव दाशार्हः । केशवः ॥ * ॥ परिप्लवते । परिप्लवः । स एव पारिप्लवः । चञ्चलः ॥ * ॥ पुष्पप्रकृतिः[5] । पुष्पकम् । पौष्पकम् । कुसुमाञ्जनम्[6] ॥ * ॥ कृष्ण एव कार्ष्णः । कुरङ्गः । अन्यो गवादिः कृष्णः ॥ * ॥ वैशारिणः । मत्स्यः । अन्यो विशारी[7] । देवदत्तादिः ॥ * ॥ ओषधिरेव । औषधम् । त्रिफलादि । अन्यत्रौषधयः क्षेत्ररूढाः शङ्खपुष्पीप्रभृतयः ॥ * ॥ आकृतिगणस्त्वायम् । तेनान्येऽपि प्रयोगा द्रष्टव्याः[8] ॥ १७७ ॥ इति प्रज्ञादिः ॥

---

१ Şişup 13, 68
२ कुरंगेनिमिषे B C D E
३ °औषधैर्भेषज° D, औषधैर्भेषज° E, A om text and comment.
४ C om चतुर्भिः प्राश्य
५ पुष्पप्रतिष्ठति. F, C om चञ्चलः
६ स एव पौष्पकं° C, तदेव पौष्पकं कुसुम F
७ वैशारिणो° विशारी D
८ D om from आकृतिगण°

यस्य । एकभावः । एकस्य वा भावः । एकभावः । स एव । ऐकभाव्यम् ॥ * ॥ मणिप्रकारो मणिकः । मणिक एव माणिक्यम् । रत्नविशेषः ॥ * ॥ अन्यो भावो यस्यासावन्यभावः । अन्यस्य वा भावोऽन्यभावः । अन्यभाव एव । आन्यभाव्यम् । यथा । आन्यभाव्यं तु कालशब्दव्यवायात्[१] ॥ * ॥ समीपमेव सामीप्यम् ॥ * ॥ सहेनेन वर्तते । सेना । सेनैव सैन्यम् ॥ * ॥ एत्य वसन्त्यस्मिन्निति । आवसथो गृहम्[२] । आवसथ एव । आवसथ्यम् ॥ * ॥ द्वयोर्भावो द्विभावः । द्विभाव एव द्वैभाव्यम् ॥ * ॥ मालैव माल्यम् । स्रक् ॥ * ॥ उपमैव । औपम्यम् ॥ * ॥ भिषज इदम् । भेषजम्[३] । यद्वा भिषज्यतीति भेषजः[४] । करणस्यापि कर्तृत्वे पचाद्यचि यलोपे च निपातनादेत्[५] । भेषजमेव भैषज्यम् ॥ * ॥ सर्वविद्या एव सार्वविद्यम्[६] । यथा ।

सार्ववैद्यविदयाश्रित चातुर्-
वैद्यवैद्य इव तं विरहार्तम्[७] ॥ १७८ ॥

**सर्वलोकचतुर्विद्याचतुराश्रमषड्गुणाः ।**
**भावशब्दस्वरा विद्यालोककालास्त्रितः परे[८] ॥ १७९ ॥**

सर्वलोका एव सार्वलोक्यम्[९] ॥ * ॥ चतस्र एव विद्याः । चातुर्वैद्यम् ।

---

१ Vârttika, Kielhorn's Mbh p 18

२ एत्यवसत्यस्मिन्नित्य॰ C, `समभ्यपसत्य॰ D, F om एत्य, अवसथो गृहं C F, ॰अवसथ एव F

३ भैषज्यं F

४ भिषज. B C F

५ कर्तृत्वमेवाचि यलोपे वा निपातनादेश् D, निपातनादेते C, [पचाद्यच् P iii 1, 134]

६ ?सर्ववेदा एव॰ B; सार्वविद्यं F — सर्वे वेदा. सर्ववेदाः॰ । तानधीते सर्ववेद॰ । स एव सार्ववेदः ॥ सर्वविद्या अधीते सर्वविद्यः । स एव सार्वविद्य. ॥ Yajñesv, सर्वविद्या is not mentioned among the *anuṣatikâdi* ṣl 164-7, but cf. चतुर्विद्या ṣl 165 and next ṣloka.

७ सर्ववैद्यविदयो B C, सर्ववैद्यविदुषो॰ F, धृतचातुर्वैद्य इव C D.

८ A om text and comment

९ सर्वे लोका॰ B, सार्वलोक्यं C

प्रधानमेव प्राधान्यम् ॥ * ॥ कविरेव काव्यः । दैत्यगुरुः । कुर्वादिभ्यो ण्ये सति काव्य इति च[1] ॥ * ॥ समानस्यैव सामान्यम् ॥ * ॥ सनिधिरेव सांनिध्यम् ॥ * ॥ सोऽर्थोऽस्येति तदर्थः । तदर्थ एव ताद‍र्थ्यम् । तच्छब्देन प्रकृत्यर्थो निर्दिश्यते ॥ * ॥ सममेव साम्यम् ॥ * ॥ चत्वार एव वर्णाः । चातुर्वर्ण्यम् । विप्रक्षत्रियविट्शूद्राः ॥ * ॥ चातुर्युग्यम् ॥ * ॥ शाकटायनस्तु षण्प्रत्ययमानयञ्शीलमेव शैलीयमाचार्यस्येत्याह[2] ॥ * ॥ जिनेन्द्रबुद्धिरनन्तरशब्दमप्यत्राधीते[3] । तथा च तेन । अनृष्यानन्तर्ये विदादिभ्योऽञित्यत्र[4] न ह्यय भावे ष्यञ् विहितः किं तर्हि स्वार्थ एव चातुर्वर्ण्यवदिति दर्शितम्[5] ॥ * ॥ आकृतिगणस्त्वायम् । तेनान्येऽपि वेदितव्याः ॥ १८० ॥ इत्यनन्तादिः[6] ॥

आदिमध्यमुखान्ताग्रप्रमाणपार्श्वयत्तदः ।
सर्वविश्वोभयैकान्यवक्षःपूर्वेदमः स्वरः[7] ॥ १८१ ॥

आद्यादेरित्यनेनाद्यादिभ्यः सम्भवद्विभक्त्यन्तेभ्यो यथासम्भवं तस्प्रत्ययो भवति ॥ * ॥ आदौ । आदितः ॥ * ॥ मध्ये मध्याद्वा । मध्यतः ॥ * ॥ एवं मुखे । मुखतः ॥ * ॥ अन्ततः ॥ * ॥ अग्रतः ॥ * ॥ प्रमाणेन प्रमाणाद्वा । प्रमाणतः ॥ * ॥ पार्श्वेन । पार्श्वतोऽकं निषेवेत[8] ॥ * ॥ येन यस्मिन्वा । यतः ॥ * ॥ एवं ततः ॥ सर्वतः ॥ विश्वतः ॥ उभयतः ॥

---

१ Cf *kurvâdi*, sl 209

२ The other works do not give शील

३ भवतरश॰ D, अनतर श॰ C—Bö and Yajū also give अनन्तर in this gaṇa.

४ Pāṇ iv 1, 104

५ इत्यत्र न ह्येवं भावे॰ D, ॰दर्शनं C F, इत्यनंत्य यभावेष्य विहितः C, C F om किं तर्हि

६ This gaṇa corresponds to the gaṇa चतुर्वर्णादि P v 1, 124, v 1.

७ स्वरा. E, A om text and comm

८ पार्श्वे पार्श्वतो वा॰ F, निषेवते C D F

तत्प्रत्ययमितीरित वचनं[1] राजकीय वा वैदिक वापि विद्यत इति तत्र हि दिग्योगलक्षणा दिक्शब्द इत्यनेनोपपदविभक्तिः पञ्चमी केन तस्यास्तसिः स्यात्। अन्ये तु हेतुपञ्चम्यन्तादपि तसमिच्छन्ति। यथा। प्रमाणाद्धेतोः। प्रमाणतः। तथा च सार्वविभक्तिकस्तसिति तार्किकाः शतशो व्यवहरन्ति[2]॥ १८१॥ इत्याद्यादिः॥

स्थूलश्चञ्चत्पत्रमूलाणुमाषाश्
　चञ्चश्चित्रं गन्धहस्तेषुचूर्णाः[3]।
पानं वर्णो मूलमुद्रार्धपादाः
　पिष्टः शूलं पल्लवः सूत्रपत्रे[4]॥ १८२॥

स्थूलादेरित्यनेन स्थूलादिभ्यः शब्देभ्य प्रकारवत्यर्थे को भवति। जातीयरोऽपवाद. ॥ * ॥ स्थूलत्वविशेषयुक्त पटः। स्थूलकः। तत्र स्थूलसदृशः स्थूलकः। स्थूलसामान्यस्य वाय भेदः स्थूलकः॥ * ॥ चञ्चतीति चञ्चन्। चञ्चत्प्रकारः। चञ्चत्कः। चञ्चता गत्वरेण सदृश[5]। चञ्चत्क ॥ बृहता सदृशः[6]। बृहत्कः। मणिर्मण्डूकः खद्योतो वा। खद्योतस्तावदुन्मेषनिमेषाभ्यां चञ्चन्निवेत्युपमीयते। मण्डूकोऽपि श्वासप्रबन्धेन गत्वर इति[7] मणि. स्पन्दमानप्रभत्वात्तथोत्प्रेक्ष्यते[8]। तथाल्पोऽपि प्रविकाशिप्रभत्वान्महानिव य उपलक्ष्यते तत्र मणौ बृहत्कशब्दो लोके प्रयुज्यते। तदाह।

---

१ यत्तत्प्राक्प्रत्यय० F, ०तं च वचन C, इतीदृशं। वचनं D

२ शतसो व्याहरंति D

३ स्थूलं चंचत्प० चचच्चित्रं० D E, वचश्चित्रं F, ०वर्णा। E

४ C om पान वर्णो, मूलमुद्रार्द्धपादा ० E, शूला D E, पल्लवसूत्रपत्र C, A om text and comment

५ चंचता गत्वरेण सदृश C, D corrupt

६ See next page, note ३

७ मस्तकोपिश्वासप्रबंधेन० C., सत्वर इति D

८ स्पदमानप्रभवत्वात्० B C ०तथोत्प्रेचते B C D

नृत्ताभिनयविषयप्रसिद्धः[1] ॥ * ॥ इषुप्रकारः । इषुकः । बाणविशेषः । इषुप्रकारोऽस्याः । इषुका । गोलिका ॥ * ॥ चूर्णप्रकारः । चूर्णकः । तालीशादिस्ताम्बूलाङ्गं वा[2] ॥ * ॥ पानप्रकारः । पानकम् । द्राक्षाशर्करादिनिर्मापितम्[3] ॥ * ॥ वर्णप्रकारः । वर्णिका । गैरिकादिः[4] । परीक्षार्थं सुवर्णादिमात्रा वा ॥ * ॥ मूलप्रकारः । मूलकः । शाकविशेषः ॥ स्त्रीत्वविवक्षायां मूलिका । शङ्खपुष्प्यादिः ॥ * ॥ मुद्राप्रकारः । मुद्रिका । अङ्गुल्याभरणम् ॥ * ॥ अर्धप्रकारः । अर्धिका ॥ * ॥ पादप्रकारः । पादिका ॥ * ॥ पिष्टप्रकारः । पिष्टिका । माषादिद्विदलधान्यचूर्णः ॥ * ॥ शूलप्रकारः । शूलिका ॥ * ॥ पल्लवप्रकारः । पल्लविका । चणकादिपत्रसंस्कारयोग्यं भक्ष्यम् ॥ * ॥ सूत्रप्रकारः । सूत्रिका ॥ * ॥ पत्रप्रकारः । पत्रकम् । तमालपत्रमेव । लिखितलघुभूर्जखण्डवाचि[5] तु ह्रस्वाल्पविवक्षायां कप्रत्यये सिद्धम् ॥ यथासंभवं सर्वत्र प्रकारे विवक्षिते शब्दशक्तिस्वाभाव्यात्स्त्रीत्वमेव ॥ १८२ ॥

हरितध्रुववाट्येक्षुमठमण्डपसंकलाः[6] ।
वाट्यकालावदातास्तु[7] सुरायामुदितास्त्रयः ॥ १८३ ॥

हरितप्रकारः । हरितकम् । अश्वादीनां यवादिघासः ॥ * ॥ ध्रुवप्रकारः । ध्रुवकः । तिथ्यादिगणनेऽविचलितोऽङ्कसंघातः[8] ॥ * ॥ वा-

१ पताका त्रिप० C , पताकात्रिपण-नादिवृत्ता० D , विषय प्रसिद्ध D

२ तालीसादि० B C , तांबूलांगद्रा B , तांबूलांगं वा D , F om from इषुप्रकारोऽस्या

३ °शर्करादिभिर्निर्मित F

४ गिरिकादि B

५ लिखितं लघु भूरिअखंडवाचि F –पत्रप्रकारः पत्रकम् तमालपत्रं लिखितभूर्जपत्रखंडं वा ॥ Yajñ.

६ °वाह्येक्षु° D , वाघेक्षु° C E

७ वाद्याकाल° C E , वाघा° D , cf n ७, p २२४, A om text and comm

८ कृत्यादिगणने°ऽङ्कसंघात C F

मणिप्रकारः मणिकः। मणिः प्रकारोऽस्येति[1] मणिकः। मणिरिव यो रत्नभूतः प्रधान मनोज्ञस्स स मणिक इत्यन्ये ॥ * ॥ पुण्ड्रकः। इक्षुविशेष.[2] ॥ * ॥ बृहत्कः। ग्राम्यसमाजे श्रेष्ठः ॥ * ॥ महत्कः[3] ॥ * ॥ चन्द्रकः ॥ * ॥ एरण्डकः। इक्षुविशेषः ॥ * ॥ मधुकः[4] ॥ * ॥ कुमारीपुत्रकः ॥ कुमारीश्वशुरकः ॥ यथा[5]।

प्रतिवसति कुमारीपुत्रका वा कुमारी-
श्वशुरकसदृशो वा ग्राम्यदेशे समृद्धिः[6]।
मणिकमधुकभास पुण्ड्रकैरण्डकेक्षु-
स्तबकितककुभस्ता[7] तद्भवोऽस्मै शशसुः ॥

कुमारीपुत्रः प्रकारोऽस्य। कुमारीपुत्रकः। यथा कुमारीपुत्र' कश्चित्सभायां प्रविशँल्लज्जते तथान्योऽपि य एवविधः स कुमारीपुत्रकः ॥ कुमारीश्वशुर' प्रकारोऽस्य। कुमारीश्वशुरकः। यस्य पुत्रः कुमार्या सह दृष्टः स कुमारीश्वशुरः। यथा पुत्रदोषेण स लज्जते तथान्योऽपि लज्जमानः कुमारीश्वशुरक इत्यन्यो व्याचष्टे[8] ॥ * ॥

---

१ मणिप्रकारो स्येति B C

२ पुद्रक इक्षु° F, on बृहत्क s p 222, note 3

३ इत्यपि महत्क B C

४ यत्तु एरडमधुकुमार्या पुत्र श्वशुरस्य संज्ञायामिति पठित्वा वर्द्धमानेनोक्तम्। एरंडक इक्षुविशेष। मधुक नालिकेरासवम्। संज्ञायामिति गणसूत्र तस्यायमर्थ। स्वप्रशंस्यर्थस्य etc as above to कुम्भिका स्तभोपधानी इत्यादि° Yaju

५ D om यथा cf next note

६ याम्यदेशे सवृद्धि B C F, ग्राम्यदेशे° D—This stanza, apparently taken from some grammatical poem, is also found in the text MS E

७ °भाषा पुडकेरडकेचू सचकितक° E, °भास पुंद्रके° F, मधुक मणिक भास पुड्रकैरडकेषु स च किल ककुभस्ता D

८ कुमारीश्वशुरक। यस्य पुत्र कुमार्या सगत स यथा शिष्टसभा प्रवेष्टु लज्जते तथा यो लज्जमान स एव व्यपदिश्यते। Yaju —Kas V i 3 has कुमार। श्वशुरक, MS a कुमारीश्वशुरक

